# मार्कण्डेयपुराणे सांख्ययोगतत्त्वविमर्शः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधि ( पी०-एच्०डी० ) इत्युपाधये

## प्रस्तुतः शोध-प्रबन्धः




१९९२

निर्देशक :—
डॉ० पारसनाथ द्विवेदी
पुराणेतिहासविभागाध्यक्षचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसीस्थस्य

गवेषकः—
मारकण्डेय नाथ तिवारी
पुराणेतिहासाचार्यः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी

श्रीकृष्णजन्माष्टमी
वि० संवत् २०४९

२० अगस्त १९९२

# मार्कण्डेयपुराणे सांख्ययोगतत्त्वविमर्शः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधि ( पी०-एच्०डी० ) इत्युपाधये

## प्रस्तुतः शोध-प्रबन्धः




१९९२

निर्देशक :—
डॉ० पारसनाथ द्विवेदी
पुराणेतिहासविभागाध्यक्षचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसीस्थस्य

गवेषकः—
मारकण्डेय नाथ तिवारी
पुराणेतिहासाचार्यः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी

श्रीकृष्णजन्माष्टमी
वि० संवत् २०४९

२० अगस्त १९९२

## निर्देशक प्रमाणपत्रम्

"मार्कण्डेयपुराणे सांख्ययोगतत्त्वविमर्शः" इति विषयमधिकृत्य सम्पूर्णानन्द संस्कृतविश्वविद्यालयीय विद्या-वारिधिः (पी०एच०डी०) इत्युपाधिमधिकर्तुं मारकण्डेय-नाथ तिवारी इति नामधेयशोधच्छात्रेण महता प्रयासेन स्वोपज्ञतया च ममनिर्देशने शोधप्रबन्धो विलिखितः। नूतनतथ्याना-मुद्घाटनपूर्वकं समीक्षणं विहितमतः शोधप्रबन्धोऽयं परीक्षणार्हः प्रकाशनार्हश्चेत्यग्रेसारयति ।

पा.ना.द्विवेदी
(डा० पारस नाथ द्विवेदी) २०.२.८२
पुराणेतिहासविभागाध्यक्षचर:
सम्पूर्णानन्द संस्कृतविश्वविद्यालय:
वाराणसी ।

अग्रे सारित
२५.२.८२

मङ्गलाचरणम्

योऽन्तःप्रविश्य मम वाचमिमां प्रसुप्तां
सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादीन्
प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥ 1 ॥

कान्तिःसिताऽऽकृतिनिन्दितशारदेन्दु-
र्यत्रैकतो विलसितामनिलाङ्गशोभाम् ।
वृन्दावनेऽपि कृतयामुनगाङ्गसङ्गम्
राधामुकुन्द युगलं तदहं नमामि ॥ 2 ॥

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ 3 ॥

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः ।
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ॥
दारिद्र्यदुःखहारिणि का त्वदन्या
सर्वोपकारकरणाय सदाऽऽर्द्रचित्ता ॥ 4 ॥

कपिलाय महामुनये शिष्याय तस्य चासुरये ।
पञ्चशिखाय तथेश्वर कृष्णायैते नमस्यामः ॥ 5 ॥

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ 6 ॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ 7 ॥

—×—×—×—

## विषयसूची

पृष्ठसंख्या

पृष्ठसंख्या

## भूमिका

सम्प्रति सर्वत्रानुसन्धानस्य लहरी प्रसृता वर्तते । ज्ञानस्य विज्ञानस्य का ऽपि शाखा नास्ति यस्यानुसन्धानं नारब्धं भवेत् । पुराणे सांख्यदर्शनविषये ऽपि च बहुभिर्विद्वद्भिरनुसन्धानं विहितं विधीयते च बहुषु विश्वविद्यालयेषु । अन्येषु विश्वविद्यालयेषु यद्-नुसन्धानं भवति तदाङ्गलभाषाया एव प्रायो व्यवहारयोग्यता-निश्चयात्तेषु कृतान्यनुसन्धानानि संस्कृतैकप्रवणेषु विद्वत्समाजेषु न लभन्ते प्रतिष्ठाम् । किन्च सांख्यदर्शनं स्पष्टरूपेण त्रिविधदुःखात्य-न्तनिवृत्तिरूपं परमपुरुषार्थं तत्त्वज्ञानाधिगम्यमिति प्रतिपादयति। तस्यामवस्थायां तदुत्पादितानां तत्त्वानां विस्तृतं क्रमबद्धं वैज्ञानिकन्च विवेचनं परमोपकारकं भवितुमर्हतीति सिद्ध्यति । तेषां तत्त्वानां विषये न्यदर्शनेषु के के विचारा अभिव्यक्ताःप्राक्तनैर्विद्-द्भिरित्यपि यदि निरूप्यते तदा तैस्तुलनायां कृतायां सांख्यतत्त्वानां स्वरूपस्य तदुत्पादनपद्धतेश्च वैशिष्ट्यमवगम्यमानं शास्त्रे ऽस्मिन् मोक्षराजमार्गानुरूपे दृढां मतिं जनयिष्यतीति वर्तते मे मनीषा । तदस्मिन् विषये केषामपि पूर्वेषां विदुषां प्रयासमप्रवृत्तमधिगम्य मया यत् किन्चिज्ज्ञानलाभलोभेन विद्वज्जनसम्पर्कसौभाग्य-लिप्सयोपाधिवाञ्छयाकृष्टमानसतया वा ऽस्मिन् विद्वज्जनैकाम्ये मार्गे सक्तोत्तरप्रवृत्तिरुपक्रान्ता करणान्मन्दकरणं श्रेय इति नीति-वाक्यमनुसरता ।

अत्र प्रबन्धे मया मार्कण्डेयपुराणे सांख्ययोगतत्त्वानां दश-भागेषु विभागं विधाय तदनुरूपमध्याया: सन्ति विरचिता:। प्रथमाध्याये महापुराणेषु मार्कण्डेयपुराणस्य स्थानम्, मार्कण्डेय-पुराणान्तर्गत सांख्ययोगतत्त्वानां निरूपणं विहितम् । तत्र मार्कण्डेय-पुराणस्य वर्ण्यविषया:,पुराणवाङ्मये मार्कण्डेयपुराणस्य महत्त्वम्,

महापुराणलक्षणानुसारं मार्कण्डेयपुराणस्य महापुराणत्वम्, मार्कण्डेय-
पुराणे दर्शनशास्त्रचर्चा कृतमस्ति । इतः परं द्वितीयाध्यायतो
नवमाध्यायान्तं यावन्मत्कृतविभागानुसारं मार्कण्डेयपुराणे सांख्य-
योगतत्त्वानां विवेचनं विहितम् । तथा द्वितीयोऽध्याये सांख्ययोग-
दर्शनाचार्याणां, तृतीयाध्याये मार्कण्डेयपुराणे प्रकृतिपुरुषविमर्शः,
चतुर्थाध्याये सांख्ययोगतत्त्वविमर्शः, पञ्चमाध्याये सांख्ययोगदृष्ट्या
सृष्टिविमर्शः, षष्ठाध्याये योगदर्शनविमर्शः, सप्तमोऽध्याये योगां-
गानि, अष्टमाध्याये योगक्रियाविमर्शः, नवमाध्याये मार्कण्डेयपुराणे
सांख्ययोगदृष्ट्या ईश्वरस्वरूपविमर्शः कृतमस्ति । तत्र प्रत्यध्यायं
तत्त्वानामुपनिषत्सु, पुराणेषु, सांख्ययोगभिन्नेष्वन्येषु पञ्चस्वा-
स्तिकदर्शनेषु च यत्स्वरूपादिदृष्टं, तत्प्रमाणं वर्णितम् । अन्ति-
माध्यायश्चोपसंहाररूपेणोपन्यस्तः। अत्रत्या विवेचनपद्धतिरेव मदुपज्ञा ।
पूर्वसूरिभिः कृतवाङ्मार्गेस्मिन् विषये बालबुद्धेर्मम नास्त्यवकाशो
यत्किञ्चिद्वचनोपन्यासेनोपज्ञत्वप्रदर्शनस्य ।

तदेषु यः प्रबन्धो मया समुपस्थापितः तस्य प्रस्तुतौ
बहुभिर्विद्वज्जनैरत्यन्तमुपकृतः साहाय्यदानेनेति तेषां नामोल्लेखनं
विना निबन्धस्यास्य न्यूनत्वमापतेदिति तेषु सप्रमाणाञ्जलिं कृत-
ज्ञत्वमावहन्तो विनिवेदयामि । तत्र सर्वप्रथमं प्रातःस्मरणीयं
आचार्य पं० सूर्यनाथ त्रिपाठिनाम्ना विश्रुतस्य तातस्य चरणयुगलं
सादरं स्मरामि, यैरहं महता परिश्रमेण वात्सल्येन संस्कृतसाहित्यस्य
पुराणस्य दर्शनशास्त्रस्य चाध्ययनाय मुहुर्मुहुः प्रेरितो भवम् ।
मदीयं यत्किञ्चिद्वैदुष्यं तेषामेव परिश्रमस्य परिणामरूपम् ।

ततो मन्निर्देशकानां गुरुवर्याणां सम्पूर्णानन्द संस्कृत-विश्वविद्यालये पुराणेतिहासविभागाध्यक्षपदमलङ्कुर्वतां "वाचस्पति" (डी०लिट्०) इत्युपाधिभाजां पूज्यपादानां डा०पारसनाथद्विवेदि-महोदयानां कृपाया अस्म्यहमधमर्णः । पूज्यपादानामुपकृतिर्न कदापि विस्मर्तुं शक्यत इति शम् ।

विदुषां वशंवदः,
मारकण्डेय नाथ तिवारी
(मारकण्डेय नाथ तिवारी)
पुराणेतिहासाचार्यः

कृष्णजन्माष्टमी
संवत् 2049
पुजारी निवास,
सम्पूर्णानन्द संस्कृत विश्वविद्यालय,
वाराणसी ।

## पुराणवाङ्मये मार्कण्डेयपुराणस्य स्थानम्

पुरा पुरातनमतीतं बोधयति बोधयति इति पुराणं ग्रन्थ-विशेषः, पुरा पूर्वस्मात् अनादिकालात् अन् प्राणने इति धातोरपि णत्वे च कृते पुराणशब्दो निष्पद्यते ।

पुरति अग्रे गच्छतीति पुरा । पुरादिगणपठितात् पुर अग्रगमने इति धातोः औणादिके अप्रत्यये कृते पुराशब्दो निष्पद्यते, योऽव्ययो मन्यते[1] । कोशानुसारं च स त्रिषु अर्थेषु प्रयुज्यते-प्रबन्धे, अतीतकाले निकटे च ।

पुराणशब्दस्य पर्यायवाचिनः प्रत्न-प्रत्न-पुरातन-चिरन्तनादयः शब्दाः सन्ति तथापि अत्र पुराणशब्देन प्राचीनाख्यायिकादियुक्ता महर्षि-व्यासद्वारा निर्मिता अष्टादश ग्रन्थविशेषा एव ज्ञायन्ते । विचारशीला-स्तु व्युत्पत्तिसमन्वितं एव पुराणं प्राचीनतमं ग्रन्थविशेषं मन्यन्ते । संस्कृत-साहित्यस्य सर्वे ग्रन्थकारा इममेवार्थं स्वीकुर्वन्ति[2] तथा स्वयं मत्स्य-पुराणमपि एतदर्थस्य मान्यतां प्रददाति ।

वायुपुराणमपि[3] प्राचीनकालतो ऽद्यावधि जीवितं साहित्यमेव पुराणं मनुते ।

---

1. स्यात् प्रबन्धे पुरातीते निकटागामिके तथा । [मे०को०25]
2. पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः । [म०पु०53/72]
3. यस्मात् पुरा ह्यनतीदं पुराणं तेन कथ्यते ।
   निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते । [वा०पु०1/203]

पद्मपुराणानुसारं प्राचीनां परम्परां व्यक्तीकर्तुं सर्वं शास्त्रमेव पुराणमुच्यते ।[1]

ब्रह्माण्डपुराणे तु भिन्नैव व्युत्पत्तिरुपलभ्यते पुरा एतदभूद् अर्थाद् प्राचीनकाले वर्तमानमासीद् । अत एतद् पुराणमुच्यते ।[2]

द्वापरतः पूर्वयुगेषु मन्ये एकमेव पुराणमासीद् । यथा एक एव वेदः पूर्वमासीद् ,किन्तु द्वापरे कृष्णद्वैपायनेन भगवता यथा एकस्यैव वेदस्य चतुर्धा विभागःपरवर्ति लोककल्याणाय कृतम् ।तथैव एकस्यैव पुराणस्य परवर्ति लोककल्याणाय बोधाय च विस्तारं विधाय अष्टादशधैव कल्पितम् । महापुराणानां परिसंख्याने महर्षिणा व्यासदेवेन, विष्णुपुराणे पुराणानां नाम पर्यायशःप्रोक्तमस्ति -
प्रथमं ब्रह्मपुराणम्,द्वितीयं पद्मपुराणम्,तृतीयं विष्णुपुराणम्,चतुर्थं शिवपुराणम्,पञ्चमं भागवतपुराणम्,षष्ठं नारदीयपुराणम्,सप्तमं मार्कण्डेयपुराणम्,अष्टममग्निपुराणम्,नवमं भविष्यपुराणम्,दशमं ब्रह्मवैवर्तपुराणम्,एकादशं लिङ्गपुराणम्,द्वादशं वाराहपुराणम्,त्रयोदशं स्कन्दपुराणम्,चतुर्दशं वामनपुराणम्,पञ्चदशं कूर्मपुराणम्,षोडशं मत्स्यपुराणम्,सप्तदशं गरुडपुराणम्,तथाष्टादशं ब्रह्माण्डपुराणमिति ।[3]

---

1. पुरा परम्परां वष्टि पुराणं तेन वै स्मृतम् । [प०पु०1/2/54]
2. यस्मात् पुरा ह्यभूच्चैतत् पुराणं तेन तत् स्मृतम् ।। [ब्र०पु०1/1/173]
3. ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ।
   तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ।।
   आग्नेयमष्टमं चैव भविष्यं नवमं तथा ।
   दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ।।
   वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् ।
   चतुर्दशं वामनञ्च कौर्मं पञ्चदशं तथा ।।

नारदीयपुराणे तु एवं क्रमो प्राप्यते -

1• ब्रह्मपुराणम् 2• पद्मपुराणम्, 3• विष्णुपुराणम्•4•वायवीय-
पुराणम्,5•भागवतपुराणम्,6• नारदीयपुराणम्, 7•मार्कण्डेयपुराणम्
8• अग्निपुराणम्,9•भविष्यपुराणम्,10•ब्रह्मवैवर्तपुराणम्,11•लिङ्गपुराणम्,
12• वाराहपुराणम्, 13•स्कन्दपुराणम्,14• वामनपुराणम्;15•कूर्मपुराणम्[1]
16• मत्स्यपुराणम्,17• गरुडपुराणम्,18• ब्रह्माण्डपुराणम् इति ।

मार्कण्डेयपुराणानुसारं पुराणसंख्या-

ब्रह्म-पद्म-वैष्णव-शैव-भागवत-नारदीय-मार्कण्डेय-अग्नि-
भविष्य-ब्रह्मवैवर्त-लिङ्ग-वाराह-स्कन्द-वामन-कूर्म-मत्स्य-गरुड-ब्रह्माण्ड-
पुराणानि ।[2]

---

*• मात्स्यं च गारुडं चैव ब्रह्माण्डञ्च ततः परम् ।
महापुराणान्येतानि ह्यष्टादश महामुने ॥
[विष्णुपुराणे 3/6/21-24]

1• ब्राह्मं पाद्मं वैष्णवं च वायवीयं तथैव च ।
भागवतं नारदीयं मार्कण्डेयञ्च कीर्तितम् ॥
आग्नेयं च भविष्यं च ब्रह्मवैवर्तलिङ्गके ।
वाराहं च तथा स्कान्दं वामनं कूर्मसंज्ञकम् ॥
मात्स्यं च गारुडं तद्वद् ब्रह्माण्डाख्यमिति त्रिषट् ।
[नार०पु०92/1-5]

2• मार्कण्डेयपुराणे -134/8-11

4

श्रीमद्भागवते च –

1. ब्राह्म 2. पाद्म 3. विष्णु 4. शिव
5. लिङ्ग 6. गरुड 7. नारदीय 8. भागवत 9. आग्नेय
10. स्कन्द 11. भविष्य 12. ब्रह्मवैवर्त 13. मार्कण्डेय
14. वामन 15. वाराह 16. मात्स्य 17. कौर्म
18. ब्रह्माण्डपुराणानि ।[1]

देवीभागवते एकस्मिन् श्लोके अष्टादशपुराणानां संक्षेपेण गणना कृता हि –[2]

यथा–

आदौ म- कारे पुराणद्वयम् 2. मत्स्य,मार्कण्डेयपुराणञ्च
" भ- कारे " 2. भागवतम्,भविष्यञ्च
" ब्र कारे पुराणत्रयम् 3. ब्रह्म-ब्रह्मवैवर्त-ब्रह्माण्डपुराणानि
"व कारे पुराणचतुष्टयम् 4. वायु-वामन-वाराह-विष्णुपुराणानि
"अ कारे एकम् 1. अग्निपुराणम्
"ना कारे " 1. नारदीयपुराणम्
"प कारे " 1. पद्मपुराणम्
"लि कारे " 1. लिङ्गपुराणम्
"ग कारे " 1. गरुडपुराणम्
"कू कारे " 1. कूर्मपुराणम्
"स्क कारे " 1. स्कन्दपुराणम्

---

1. ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम् ।
नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ॥
भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् ।
वाराहं मात्स्यं कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥
[श्रीमद्भागवत 12/6-23-24]

2. मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
अनापलिङ्गकूस्कानि पुराणानि पृथक् पृथक् ॥ [दे०भा० 1/3/2]

भगवान् नारायणो विराट् ।[1]

पुराणानां सृष्टिप्रक्रिया सांख्यदर्शनस्य सृष्टिप्रक्रियया पूर्णतः प्रभाविता किल । तत्र 25 तत्त्वान्यभिमतानि सन्ति-मूलप्रकृतिः, महत्,अहंकारः,पञ्चतन्मात्राः ,एकादशेन्द्रियाणि,पञ्चमहाभूतानि पुरुषश्च । परं सांख्यदर्शनानुसारं प्रकृतिपुरुषयोःसृष्टिर्भवति,यतो हि सापेक्षानन्तौ तत्त्वे स्तः। पौराणिकसृष्टिप्रक्रियायां पञ्चतन्मात्राणां-महाभूतेषु प्रायो भेदो नाङ्गीकृतो किल,यतो पञ्चतन्मात्राण्येव स्थूलरूपाणि पञ्चमहाभूतानि भवन्ति । एवं तत्र सूक्ष्माणि तत्त्वानि देवतान्यष्टादशकस्याधिष्ठानरूपेणोपतिष्ठन्ते अतः सांख्यदर्शनानुसारं सृष्टि-प्रक्रियाप्रतिपादकानां पुराणानां अष्टादशसंख्यातःसम्बन्धो स्वरूपापन्न

---

1. ब्राह्मं मूर्धा हरेरेव हृदयं पद्मसंज्ञितम् ।
वैष्णवं दक्षिणो बाहुः शैवं वामो महेशितुः ।।
ऊरु भागवतं प्रोक्तं नाभिः स्यान्नारदीयकम् ।
मार्कण्डेयञ्च दक्षाङ्घ्रिर्वामो ह्याग्नेयमुच्यते ।।
भविष्यं दक्षिणो जानुर्विष्णोरेव महात्मनः ।
ब्रह्मवैवर्तसंज्ञन्तु वामो जानुरुदाहृतः ।।
लैङ्गन्तु गुल्फकं दक्षं वाराहं वामगुल्फकम् ।
स्कान्दं पुराणं लोमानि त्वगस्य वामनं स्मृतम् ।।
कौर्मं पृष्ठं समाख्यातं मात्स्यं मेदः प्रकीर्त्यते ।
मज्जा तु गारुडं प्रोक्तं ब्रह्माण्डमस्थि गीयते ।।
एवमेवाभवद्विष्णुः पुराणावयवो हरिः ।।

[पद्मपुराणस्य स्वर्गखण्डे 62/2-7]

2• <u>प्रतिसर्गः</u> –

प्रतिसर्गो नाम प्रलयः । विष्णुपुराणे प्रतिसर्गस्य पर्यायत्वेन प्रतिसञ्चरशब्दः[1] प्रयुक्तः उपलभ्यते । श्रीमद्भागवते अस्य शब्दस्य पर्यायत्वेन संस्था शब्दः प्रयुक्तः । अस्य ब्रह्माण्डस्य स्वभावतः एव प्रलयो भवति । एते प्रलयाश्चतुःप्रकारका भवन्ति ।[2] ते नैमित्तिकः, प्राकृतिकः, नित्यः, आत्यन्तिकश्चेति एते एव प्रलयाः संस्थाशब्देन अभिहिताः सन्ति ।

3• <u>वंशः</u> –

ब्रह्मणा येषां राज्ञां सृष्टिरभूत्[3], तेषां भूतभविष्यद्वर्तमानकालिकी सन्तानपरम्परा वंशपदेन उच्यते । भागवतकारेण अस्य शब्दस्य राज्ञः सन्तानपरम्परायाः उल्लेखः प्रधानतया कृतः । किन्तु वंशपदेन राज्ञामेव ग्रहीतव्यः इति उचितं नास्ति किन्तु अस्य शब्दस्य ऋषीणामपि वंशः गृहीतो स्ति इति पुराणान्तरेष्वपि कथितम् ।

---

1• वि०पु० 1/2/25

2• नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः ।
संस्थेति कविभिः प्रोक्ता चतुर्धास्य स्वभावतः ॥
[भा०पु० 12/7/17]

3• राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ।
[भा० 12/7/16]

4. मन्वन्तरम्–

मन्वन्तरेति शब्दः पुराणानुसारेण सृष्टेः भिन्नस्य कालमानस्य बोधको व शब्दः। पौराणिककल्पनायाः महत्त्वं स्वीकृत्य यथास्थानं पुराणेष्वपि मन्वन्तराणि चतुर्दश सन्ति । तथा प्रत्येके मन्वन्तरस्य अधिपतिरेको विशिष्टो मनुः भवति । तस्य सहायकाः पञ्चपदार्थाः भवन्ति । मनु देवता मनुपुत्राः इन्द्रः सप्तर्षिः तथा भगवतोऽवतारः एतैः षड्भिर्विशिष्टैर्युक्ताः समयाः मन्वन्तराणि उच्यन्ते ।[1]

5. वंशानुचरितम्–

पूर्वोक्तेषु उत्पन्नानां वंशानां तथा कुलपुरुषाणां राज्ञां विशिष्टं विवरणं यत्र वर्णितमस्ति तद् वंशानुचरितत्वेन उच्यते ।[2] तत्र मनुवंशे प्रसूतानां महर्षीणां तथा राज्ञां चरितमपि समाविष्टं विद्यते । महर्षीणां चरित्रापेक्षया राज्ञां चरितस्यैव विशेषः ।

विवरणं पुराणेषु लभ्यते । राजनीतिशास्त्रेषु पुराणं पञ्चलक्षणमित्यस्य एकः नवीनः दृष्टिकोणः उपस्थापितो स्ति । यद् कामन्दकि निर्दिष्टवान्

---

1. मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः ।
ऋषयोंऽशावताराश्च हरेः षड्विधमुच्यते ॥
[भा० 12/7/15]

2. वंशानुचरितं तेषां वृत्तं वंशधराश्च ये ॥
[भा० 12/7/16]

13

लक्षणात् कामं भिन्नमस्ति । कौटिल्यशास्त्रस्य व्याख्यायां जयमङ्गलाकारेण कस्मादपि प्राचीनात् ग्रन्थात् अत्र प्रमाणमुपन्यस्तम्।[1]

अत्र पञ्चलक्षणस्य पुराणस्य कापन नूतना व्याख्या प्रतिपादिता स्ति । धर्मः पुराणस्य एकं अविभाज्यं लक्षणमङ्गीकृतमस्ति तात्पर्यमिदमस्ति मूलतः पुराणेषु धार्मिकाणां विषयाणां सन्निवेशः आसीत् । धर्मेण पुराणस्य सम्बन्धः आभ्यन्तररूपेण अनेकशताब्दीनां घटनास्ति । यदेदं अन्येषां विषयाणां संग्रहं कृतवान्। इदानीं तनानां संशोधकानां बोधा इदमेव सर्वमान्यमस्ति ।किन्तु जयमङ्गलायाः एतेन महत्त्वपूर्णेन उल्लेखेन इदं मतं विशुद्धं न प्रतीयन्ते। अवान्तराणि सर्गं उक्त्वा भागवते नापि मन्वन्तरस्याभ्यन्तरधर्मस्योपन्यासः न्यायः अमानि । कथनमिदं पूर्वोक्तस्य सिद्धान्तस्य पोषकं मन्यते ।[2]

अस्मिन् संक्षिप्ते विवरणे वंशाभ्यन्तरे देवतानां ऋषीणाञ्च वंशानामपि समावेशः मन्तव्यः । अत्र प्रधानो हेतुः सूतस्य कार्येण सह अस्य पूर्णा सम्मतिः वर्तते । प्रथमं प्रतिपादितमस्ति अत्र पुराणस्य वाचनं व्याख्यानञ्च आसीत् । वायुपुराणे प्रथमेऽध्याये[3]

---

1. सृष्टि-प्रवृत्ति-संहार-धर्म-मोक्षप्रयोजनम् ।
   ब्रह्मभिर्विविधैः प्रोक्तं पुराणं पंचलक्षणम् ।। [कौ०अ०शा० । 15 ]
2. "पुराण" पत्रिकायां पण्डितराजेश्वर शास्त्री द्रविड़कृत लेखः "भारतीय राजनीतौ पुराणपंचलक्षणम्"।
   [जुलाईमासस्य 1964 ईसवीये ]
3. वंशानां धारणं कार्यं श्रुतानां च महात्मनाम् ।
   इतिहासपुराणेषु दिष्टा ये ब्रह्मवादिभिः ।। 32 ।।
   [illegible] दृश्यते ।। [वायुपु० ]

14

सूतेन स्वधर्मस्य निर्देशः महत्त्वपूर्णेषु शब्देषु कृतो ऽस्ति । पुरातनैःसज्जनैःदृष्टः उपदिष्टो वा सूतस्य स्वधर्मो ऽस्ति । देवतानां ऋषीणां अमिततेजसां राजान्च तथा लोकविश्रुतां महात्मनां वंशस्य धारणमस्ति ।[1] इमे महात्मानः इतिहास पुराणेषु ब्रह्मवेत्तृभिः दिष्टा सन्ति । सूतस्याधिकारः वेदेषु न भवति । वायुपुराणस्य एतेषां वचनानां द्वारा पुराणस्य वेदस्य च द्वैविध्यं विशेषरूपेण द्योतितमस्ति । इदं पौराणिक वचः अस्माकं कथनस्य पुष्टिं करोति यत् पुराणस्य धारा वैदिकधाराभ्यःभिन्ना धारा आसीत् । यस्य संरक्षणस्य संवर्धनस्य प्रचार प्रसारस्य सूतस्य अधिकारःआसीत् ।

पुराणस्य पञ्चलक्षणेभ्यः अतिरिक्तानि दशलक्षणानि सन्ति ।श्रीमद्भागवते तथा ब्रह्मवैवर्त पुराणे दशलक्षणानि महापुराणस्य निर्दिष्टानि सन्ति ।[2] तथा पूर्वोक्तानां पञ्चलक्षणानां क्षुल्लक पुराणानां लक्षणानि मन्यन्ते स्म । अत्र दशलक्षणानां पञ्चलक्षणानान्च तुलनात्मकविवेचनायां संक्षिप्तं रूपं प्रस्तूयते । एकं वस्तु अवश्यं धातव्यं ऽस्ति श्रीमद्भागवतस्य स्थलद्वये ऽपि प्रस्तुतेषु लक्षणेषु सर्वथा साम्यमस्ति। नाम्ना वैषम्यमस्तु । एतस्मिन् स्थलद्वये शब्दभेदो अवश्यमस्ति परन्तु अभिप्रायभेदो नास्ति भागवतस्य द्वादशस्कन्धानुसारम् इमानि दशलक्षणानि ।

---

1. स्वधर्म एष सूतस्य सद्भिर्दृष्टः पुरातनैः।
   देवतानामृषीणां च राज्ञां चामिततेजसाम् ।।
   [वा॰पु॰ 31 अ0]
2. अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
   मन्वन्तरेशानुकम्पा निरोधो मुक्तिराश्रयः ।।
   [भा॰ 2/10/1]

नास्ति ।[1]

| | |
|---|---|
| 1· सर्ग: | 2· विसर्ग: |
| 3· वृत्ति: | 4· रक्षा |
| 5· अन्तराणि | 6· वंश: |
| 7· वंशानुचरितम् | 8· संस्था |
| 9· हेतु: | 10· अपाश्रय: |

1· <u>सर्ग:</u>-

पूर्ववर्णितात् सर्गात् अयं सर्ग:भिन्नो नास्ति ।

2· <u>विसर्ग:</u>-

जीवस्य सृष्टि:। परमेश्वरस्य अनुग्रहेण ब्रह्मण:सृष्टिसामर्थ्यं प्राप्य महत्तरत्वादि पूर्व कर्मानुसारेण समीचीनानां कुत्सितानां कर्मणा तेषां वासनानां प्रधानतया अस्य चराचरस्य शरीरात्मकेन उपाधिना विभिन्नस्यजीवस्य सृष्टि:कृतास्ति । इयमेव सृष्टि:विसर्ग शब्देन उच्यते । अस्या:उपमाया:विषये प्रतिपादितं यत् यथा एकस्मात् बीजात् अपरस्य बीजस्य उत्पत्ति: भवति तथैव एकस्मात् जीवात् अपरस्य जीवस्य । इत्थं विसृष्टि:इत्यस्य विविधा सृष्टि:अर्थो भवति न तु वैपरीत्येन सृष्टि:प्रलय:इत्यादि ।[2]

---

1· सर्गो स्याय विसर्गस्य वृत्ती रक्षान्तराणी च ।
वंशो वंशानुचरित संस्था हेतुरपाश्रय: ।
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदु:।
केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ।। [भा० 12/7/9-10]

2· पुरुषानुगृहीतानामेतेषां वासनामय: ।
विसर्गो यं समाहारो बीजाद्बीजं चराचरम् ।। [भा० 12/7/12]

16

3. <u>वृत्तिः</u>

जीवानां जीवननिर्वाहाय सामग्री वृत्तिः। भागवतानुसारेण चरपदार्थानां अचरपदार्थवृत्तिरस्ति । मानवजीवननिर्वाहाय येषां वस्तूनामुपयोगःमनुष्यःकरोति सैव तस्य वृत्तिः। तण्डुलाः, गोधूमाः इत्यादीनि अन्नानि सर्वाणि वृत्त्यन्तर्गतानि सन्ति । काश्चित् वृत्तयःमनुष्याःस्वस्वभावेन स्वकामनाभिः निश्चिताः। तथा काश्चन वृत्तयः शास्त्राणामादेशेन ताः गृह्णन्ति । द्वयोः उद्देश्यं एकमेवास्ति मानवजीवनस्य धारणं संरक्षणञ्च ।[1]

<u>रक्षा-</u>

युगे-युगे भगवान् पशु-पक्षी-मनुष्य-मुनिदेवादिरूपेण अवतीर्य अनेकलीलां विधत्ते । वेदशत्रूणां विघातं कृत्वा धर्मं स्थापयति । भगवतो विष्णोः अवतारलीला विश्वस्य रक्षार्थमेव भवति । अतो भगवत् लीलेयं रक्षापदेन व्यपदिश्यते ।[2]

<u>5-अन्तराणि-</u>

मनुः मनुपुत्राः ऋषयःदेवताःइन्द्राःविष्णोरंशावतारश्च । इति भेदैः षड्भिः वैशिष्ट्यैःयुक्तःसमयःमन्वंतरमुच्यते । मन्वन्तरेणैव सर्वो व्यवहारःप्रचलति ।प्रत्येकं मन्वन्तरस्य स्वामी कश्चन एको

---

1. वृत्तिर्भूतानि भूतानां चराणामचराणि च ।
कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ॥
[भा० 12/7/13]

2. रक्षाच्युतावतारेह विश्वस्यानु युगे युगे ।
तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैः त्रयीद्विषः ॥ [भा० 12/7/14]

17

6·7-वंश: वंशानुचरितञ्च -

ब्रह्मण: सकाशादुत्पन्नानां भूतभविष्यद्वर्तमानानां राज्ञां ऋषीणाञ्च सन्तानपरम्परावंश तेषां वंशधराणां चरित्रचर्चा वंशानुचरितमुच्यते ।

8· संस्था-

स्वभावादेव ब्रह्माण्डस्य प्रलयो भवति । संस्था :प्रलय:। स च चतुर्विध: -नित्य,नैमित्तिक,प्राकृतिक,आत्यन्तिक भेदात् । तत्त्वज्ञै: विद्भि: प्रलय एव संस्था पदेनाभिधीयते ।

9· हेतु:-

वस्तुत: जीव एव अत्र हेतु: व्यवह्रियते । यत: स एव अदृष्टद्वारा सर्गविसर्गादीनां कर्मणां भवति हेतु:कर्त्ता ।अविद्याविवशो जीव:। विविधकर्मकलापेषु आसक्तो भवति । स एनं च प्रधानतत्त्व-दृष्ट्या पश्यन्ति । तं एनं अनुशायिनो प्रकृतौ शयनकर्त्तारं कथयन्ति। ते च उपाधिदृष्ट्यावलोकयन्ति । ते तं अव्याकृतं प्रकृतिरूपं वदन्ति ।[1]

10· अपाश्रय:-

त्रिषु जागृत-स्वप्न सुषुप्ति अवस्थासु तत:परं तुरीयतत्त्वरूपेण (साक्षिरूपतया) लक्ष्यते ।तदेव ब्रह्म अत्र अपाश्रय शब्देन उच्यते ।[2]

---

1· हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारक:।
यं चानुशायिनं प्राहुरव्याकृतमुतापरे ।। (भा0 12/7/18)

2· व्यतिरेकान्वयो यस्य जाग्रत-स्वप्न-सुषुप्तिषु ।
मायामयेषु तद् ब्रह्म जीववृत्तिष्वपाश्रय: ।। (भा0 12/7/19)

18

## उभयोः लक्षणयोः सामञ्जस्यम्

उभयत्र स्थाने दीयमाने शब्दभेदएव लक्ष्यते नाभिप्रायभेद उपलभ्यते ।

द्वितीय स्कन्धे (1) सर्गः (2) विसर्गः (3) स्थानम् (4) पोषणम्, (5) ऊतिः (6) मन्वन्तरम् (7) वंशानुकथा (8) निरोधः (9) मुक्तिः (10) आश्रय इति दश लक्षणान्युक्तानि निम्नाङ्कितेन विवरेण स्पष्टमं ज्ञेयं भवति ।

| क्रम | द्वितीयस्कन्धलक्षणम् | द्वादशस्कन्धलक्षणम् |
|---|---|---|
| 1. | सर्गः | सर्गः |
| 2. | विसर्गः | विसर्गः |
| 3. | स्थानम् | वृत्तिः |
| 4. | पोषणम् | रक्षा |
| 5. | ऊतिः | हेतुः |
| 6. | मन्वन्तरम् | अन्तरम् |
| 7. | वंशानुकथा | वंश-वंशानुचरिते |
| 8. | निरोधः | संस्था : |
| | | नित्य प्रलयः |
| | | नैमित्तिक प्रलयः |
| | | प्राकृतिक प्रलयः |
| 9. | मुक्तिः | आत्यन्तिक प्रलयः |
| 10. | आश्रयः | अपाश्रयः |

१७

## पञ्चलक्षणे दशलक्षणस्यान्तर्भावः

नतु दशलक्षणानां पञ्चभिः लक्षणैः विषमवादात् कथं तेषां प्रामाण्यं मिति कतिपये पण्डिताः (मनीषिणः) दशलक्षणानां पञ्चलक्षणेषु एव अन्तर्भावो विदधति । कतिपये विद्वांसः दशलक्षणानि महापुराणानि उपपुराणानि च पञ्चलक्षणानि इत्येवं समादधति । तत्र पुराणं पञ्चलक्षणं इति वादिनां मते श्रीमद्भागवते प्रतिपादितानि दशलक्षणानि अन्येषु पुराणेषु प्रतिपादितस्य पञ्चलक्षणस्यास्ति । आवश्यकतायां समुपस्थितायां विस्तरमात्रं श्रीमद्भागवते सर्ग-विसर्ग-वंशानुचरित-मन्वन्तराणि तु शब्दत एव प्रतिपादितानि ।अवशिष्टानामन्येषां एतेष्वेव अन्तर्भावःसम्भवति । सर्गस्य प्रकृतेर् गुण वैषम्याद् जायमानाय विराटसृष्टिः (ब्रह्माण्डस्य समष्टिसृष्टिः)। परिणामतः सर्गे विसर्गस्य अन्तर्भावः सम्भवितःएवञ्च विसर्गो हि सर्गस्यावान्तरभेदेव एवं आश्रयापाश्रयशब्दाभ्यां उपात्तः ईश्वरः सर्गकर्तृकरत्वेन हेतुः। ऊतिरपि सर्ग एव अन्तर्भवितुमर्हति । प्रतिसर्गे च संस्थानिरोधयोःअन्तर्भावः। मन्वन्तरे अन्तरस्यान्तरभावः। वृत्तिःस्थानं येषां तथा पोषणं रक्षा वा वंश-वंशानुचरितयोःस्फुटमन्तर्भावः।

तथाहि -

सर्ग-विसर्ग-हेतु-ऊति-आश्रयापाश्रयाणामन्तर्भावः।

प्रतिसर्गे-संस्था-निरोधयोरन्तर्भावः।

मन्वन्तरे-अन्तरस्यान्तर्भावः।

वंशवंशानुचरितयोः-वृत्ति-स्थान-रक्षा-पोषण-वंशानुकथानामन्तर्भावः।

20

## मार्कण्डेयपुराणम्

पुराणस्यप्रतिमादिलक्षणस्य निकषोपले मार्कण्डेयपुराणस्य धर्षणे क्रियते यद् इदं मार्कण्डेयपुराणं सर्वोपाङ्गमस्ति । यतो हि अत्र सर्गस्य, प्रतिसर्गस्य, वंशस्य ,मन्वन्तरस्य वंशानुचरितस्य च विशुद्धं विवेचनं प्रस्तुतमस्ति तदेव अत्रो प्रदर्श्यते । मार्कण्डेयपुराणस्य सप्तचत्वारिंशत् अध्यायतः पञ्चपञ्चाशत अध्यायं यावद् सर्गो वर्णनः।

सर्गः-[सृष्टिः]

निष्क्रियरूपेण अर्थात् समभावेन अवस्थितयोःप्रकृतिपुरुषयोः सर्गशक्तिमतः सर्वज्ञस्य परमेश्वरस्य अनुप्रवेशेन प्रकृतेःक्षोभेन सर्गस्यारम्भो भवति । चतुःचत्वारिंशत् तमे अध्याये सर्गस्य विशिष्टाःत्रयो भेदाः निर्दिष्टाः सन्ति । ते च प्राकृता-वैकृता-कौमाराश्च । प्राकृतस्य सर्गस्य त्रयो भेदाः- ब्रह्मसर्गः-भूतसर्गः-इन्द्रियसर्गश्च वैकृतसर्गस्य पञ्चभेदाःसन्ति मुख्य सर्गः-तिर्यक् सर्ग-देवसर्गश्च-मानुषसर्गः-अनुग्रहसर्गश्च कौमारसर्गस्य द्वितीयं नाम रुद्रसर्गो स्ति । अस्य कस्यापि अवान्तर भेदस्य चर्चानास्ति । तेषां सर्गाणां चर्चा आगामिषु श्लोकेषु वर्तते ।

महतः ब्रह्मणःउत्पत्तिः प्रथमो ब्रह्मसर्गः।तन्मात्रायाः[1] उत्पत्तिः द्वितीयसर्गः, अयमेव सर्गःभूतसर्गोपदेस व्यपदिश्यते ।

---

1. प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ।
   तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ।।
   [मार्कण्डेय पु044/31]

तृतीय: इन्द्रियसर्ग:अयमेव वैकारिकपदेनव्यपदिश्यते ।एतएव प्राकृतसर्गपदेन व्यपदिश्यते । एतेषां उत्पत्तिर्बुद्धिपूर्विका भवति ।[1]

मुख्यस्य तात्पर्यं -स्थावरं अर्थात् भूमि:पर्वत: वृक्षादयश्च । एतेषां उत्पत्ति: चतुर्थसर्ग: ।अस्यैव नाम मुख्यसर्गोऽस्ति । तिर्यक अर्थात् पशुपक्षी-सर्पादीनां उत्पत्ति: पञ्चमो सर्ग:। अस्यैव तिर्यक्स्रोत-तिर्यक्सर्ग वा नाम्नाभिधीयते ।[2]

उद्ध्र्वस्रोत-देवतानाम् उत्पत्ति: षष्ठ:सर्ग: अस्यैव नाम देवसर्ग: ।अर्वाक्स्रोत-मनुष्याणां सप्तमो सर्ग: अयमेव मानुषसर्ग: उच्यते ।[3]

अष्टमो अनुग्रहसर्ग:यत्र सात्त्विकस्य तामसस्य च समावेशो वर्तते । मुख्यत: अनुग्रहपर्यन्तं इमे पञ्चसर्गा:वैकृता:[4]सन्ति । तथा तत: पूर्वं प्रतिपादिता: त्रयसर्गा: प्राकृता:सन्ति ।

त्रय: प्राकृता:पञ्चवैकृता:नवमश्च कौमार: एते सर्व सहत्व-प्रजापते:नवसर्गा:सन्ति ।[5]

---

1. वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियक:स्मृत:।
   इत्येष प्राकृत सर्ग: सम्भूतो बुद्धिपूर्वक:।।मार्कण्डेयपु०44/32।।
2. मुख्यसर्गश्चतुर्थस्तु मुख्या:वै स्थावरा:स्मृता:।
   तिर्यक्स्रोतस्तु य:प्रोक्तस्तिर्यग्योन्य:स पञ्चम:।।मा०पु०44/33
3. तथोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृत:।
   ततो र्वाक्स्रोतसां सर्ग:सप्तम:स मानुष:।।मा०पु०44/34।।
4. अष्टमो नुग्रह:सर्ग:सात्त्विकतामसश्च स:।
   पञ्चैते वैकृता:सर्गा:प्राकृतास्तु त्रय: स्मृता:।।मा०पु०44/35

एतेषां सर्वेषां सर्गाणां मूलं स्थानं ब्रह्मास्ति । यद् अनन्त-सत्ताकं, अखण्डचैतन्यं अद्वितीयमानन्दरूपमस्ति ।

## प्रतिसर्गः

प्रतिसर्गः अर्थात् प्रलयस्य चत्वारः भेदाः सन्ति-नित्यः, नैमित्तिकः, प्राकृतः, आत्यन्तिकश्च । यः प्रलयः प्रतिदिनं भवति स नित्य प्रलयः उच्यते । यथा- सुषुप्तः सुषुप्त्यवस्थायां सुप्तजीवस्य समस्तस्य कार्यप्रपञ्चस्य लयो भवति अर्थात् प्राणिनः स्वापकाले तावद् तस्य कृते प्रलयस्यावस्था भवति ।

ब्रह्मणः दिने सावयसर्गस्य अस्तित्वं अक्षुण्णं भवति। यदा तस्य रात्रिर्भवति तदा भू, भुवः, स्वः इत्येतेषां त्रयाणां लोकानां नाशो भवति । अयमेव नाशः नैमित्तिकप्रलयेनाभिधीयते ।

ब्रह्मणः दिनस्य समाप्तिरूपात् निमित्तात् अस्य नाम नैमित्तिकमुच्यते । ब्रह्मणः एकस्य दिनस्य य अवधिर्भवति, स एव तस्य रात्रेरपि अवधिर्भवति । तथा स एव अस्य प्रलयस्यापि अवधिर्भवति।

---

*• प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ।
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ।। [भा•पु•44/36]

|• तस्यान्ते प्रलयः प्रोक्तो ब्रह्मन् नैमित्तिको बुधैः ।
भूर्लोको थ भुवर्लोकः स्वर्लोकश्च विनाशिनः ।। [भा•पु•43/40-41]

23

एकस्मात् सूर्योदयात् अपरसूर्योदयं यावत् काल:मनुष्याणां एको अहोरात्रमस्ति । पन्चदशानां अहोरात्राणां एक:पक्ष:उच्यते। द्वयो:पक्षयो: एको मासो भवति । षण्णां मासानां एकं अयनं भवति। द्वयो अयनयो:{उत्तरदक्षिणयो:}एक: वर्षो[1] भवति । मनुष्यस्य अयमेको वर्ष: देवानां एको अहोरात्रो भवति ।

देवानां अहोरात्रेण निर्मितानां द्वादशमासानां एक:दिव्य: वर्षो भवति । द्वादशानां सहस्रवर्षाणां एका एकसहस्रचतुर्युगानां ब्रह्मण: एकं दिनं भवति ।[2]

यदा ब्रह्मण: एकं दिनं पूर्तिं गच्छति अर्थात् एका सहस्रयुगी व्यतीता भवति तदा एतावान् काल: ब्रह्मण:एका रात्रिर्भवति ।

तत्प्रमाणैव सा रात्रि:। इत्थं नैमित्तिकप्रलयस्य अवधि: एकसहस्रयुगानां अवधि तुल्यो भवति । अस्मिन् अवधौ ब्रह्मा शेते । अस्यां रात्रौ व्यतीतायां ब्रह्मण:स्वाप:समाप्यते तदा स नवीनां सृष्टिं विरचति ।

ब्रह्मण: उपर्युक्तेन[3] अहोरात्रेण निर्मितानां वर्षाणां एकं शतं ब्रह्मण: आयुर्भवति ।

---

1• अहोरात्रैश्च त्रिशद्भि: पक्षौ द्वौ मास उच्यते ।
तै: षड्भिरयनं वर्षं द्वे यने दक्षिणोत्तरे ।।
तद्देवानामहोरात्रम् दिनं तत्रोत्तरायणम् ।

2• दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ।
चतुर्युगं द्वादशभिस्तद्विभागं शृणुष्व मे ।। {मा•पु•43/28}

3• एतत्सहस्रगुणितमहर्ब्राह्मयमुदाहृतम् ।। {मा•पु•43/33}

4• तस्य वर्षशतं ह्येकं परमायुर्महात्मन:।
ब्राह्मेणैव हि मानेन तस्य संख्यां निबोध मे ।।मा•पु•43/24

एतेषां शतस्य वर्षाणां संज्ञास्ति पर इति । तस्यार्द्ध भागस्य अर्थात् पञ्चाशत् वर्षात्मक:काल: परार्ध इति शब्देन उच्यते । प्रथम:परार्ध व्यतीत:,द्वितीयस्य परार्धस्य सम्प्रति वाराहकल्प: प्रचलति ।[1]

ब्रह्मण: एकं दिनं एक: कल्प:कथ्यते ।

ब्रह्मण:आयुष: अयं द्विपरार्धात्मक:काल:परब्रह्मपरमेश्वरस्य एकं दिनमस्ति ।[2]

ब्रह्मण: कथितस्य आयुष:पूर्वो समस्तस्य त्रिलोकस्य,प्रकृतौ लयो भवति । ब्रह्मा पि कालस्य मुखविवरं प्रविशति । अव्यक्त: स्व अधिकेन विकारेण रहित: स्वस्वरूपे अवस्थितो भवति । प्रकृति: पुरुषश्च समान धर्माणौ अर्थात् निष्क्रियौ भूत्वा अवस्थितौ भवत:। प्रकृते: अयं महान् विनाश:प्राकृत प्रलय: उच्यते ।[3]

------------------------------

1· शतं हि तस्य वर्षाणां परमित्यभिधीयते ।
पञ्चाशद्भिस्तथा वर्षै परार्धमिति कथ्यते ।।
पवमस्य परार्ध तु व्यतीतं द्विजसत्तम ।
द्वितीयस्य परार्धस्य वर्तमानस्य वै द्विज ।
वराह इति कल्पो यं प्रथम: परिकल्पित:।। [भा०पु०43/45-46]

2· उत्पत्तेब्रह्मणो यदायुषो द्विपरार्धकम् ।
तावद्दिनं परेशस्य तत्समा संयमे निशा ।। [भा०पु०43/7]

3· यदा तु प्रकृतौ याति लयं विश्वमिदं जगत्
तदोच्यते प्राकृतो यं विद्भि: प्रतिसञ्चर: ।।
स्वात्मन्यवस्थिते व्यक्ते विकारे प्रतिसंहृते ।
प्रकृति:पुरुषश्चैव साधर्म्येणावतिष्ठत: ।। [भा०पु०43/3-4]

25

अयं प्राकृतप्रलय एव परमेश्वरस्य रात्रिरुच्यते । अस्य अवधिः ब्रह्मणः आयुषः अवधिरूपः उच्यते ।

अस्य प्रलयस्य अवधौ समाप्ते एव रात्रेः अन्ते प्रातः परब्रह्मपरमेश्वरः स्व योगेन प्रकृतिं संक्षोभ्य नूतनस्य ब्रह्मणः उत्पत्तिं करोति तथा तद् द्वारा नूतनायाः सृष्टेः रचना विस्तारश्च भवति ।

वंशः:-

वंशशब्देन अत्र ते राजवंशाः विवक्षिताः ये भिन्नेन -भिन्नेन मनुना प्रतिष्ठिताः भूत्वा पृथ्वीं शासन्ति स्म । यस्य चरितेन विधानेन च तस्मिन्-तस्मिन् समये प्रजावर्गस्य गतिः परिचालिता भवति । राजवंशानां वर्णनं मार्कण्डेयपुराणे विस्तरेण वर्णितमस्ति । मार्कण्डेयपुराणे अष्टनवति तमा  ध्याया वंशाना तेषां चरित्राणाञ्च वर्णनमस्ति ।

किञ्च भगवतो ब्रह्मणः सकाशाद् मानससृष्टया सप्तर्षयो- भूवन्, तेभ्य एव नानावंशाः कालक्रमेण समुत्पन्नाः । तत्रैव कश्यपादिरयोः सकाशाद् सर्वसृष्टयः संकल्पजाः मन्त्रजा अयोनिजाः योनिजाश्च जाता इति इतिहासपुराणप्रसिद्धैवं कथा । पुराणेषु ऋषिवंशजानां राजवंशानाञ्च वर्णन माध्यमेन सर्वाणि तत्त्वानि वेदोपबृंहणत्वेनोपयुज्यन्ते । अतः

---

1. अहर्मुखे प्रबुद्धस्तु जगदादिरनादिमान् ।
सर्वहेतुरचिन्त्यात्मा परः को प्यपरक्रियः ॥
प्रकृतिं पुरुषं चैव प्रविश्याशु जगत्पतिः ।
क्षोभयामास योगेन परेण परमेश्वरः ।
प्रधाने क्षोभ्यमाणे तु स देवो ब्रह्मसंज्ञितः ।
उत्पन्नः स जगद्योनिरगुणो पि रजोगुणम् ।
भुञ्जन्प्रवर्तते सर्गे ब्रह्मत्वं समुपाश्रितः ॥ [मा०पु०43/10-15]

26

एतद् प्रसंगान्तर्गतमर्थनीयत्वात् वंशशब्दव्युत्पत्तिविषये विविच्यते किञ्चित् -

वंश (बांस "इति भाषायाम्)तन्तलि इत्यर्थयोग कोषेषु व्यवहृतो दृश्यते ।[1] यद्यपि कीचकमूलको वंशशब्दः वृक्षार्थक एव परमयर्थः वंशवर्णने पुराणेषु नोपयुक्तः । पुराणेषु वंशशब्देन उपर्युक्तमेव तथ्यं गृहीतं मया । वंशकान्तौ इति धातोः घञ् प्रत्यये नुम् च कृते वंश-शब्दो निष्पद्यते । अथवा वन्यते विस्तार्यते इति वंशःइति व्युत्प-त्तया "वन सम्भक्तौ "इति धातोः बाहुलकात् श प्रत्यये -वाति, विस्तारयति वंशः इति व्युत्पत्तिः संगच्छति । तस्मात् वंशशब्दो न पुराणेषु प्रसिद्धः नानाघटनापटीयसी भगवत्याः प्रकृतेःसाम्राज्ये विस्तृतः प्रसृतश्चार्य परम्परा राजवंशपरम्परा चैव वर्णनीयो भवतीति अवगन्तव्यम् । मार्कण्डेयपुराणस्य वक्ता महामुनिमार्कण्डेयो स्ति । पुराणस्यादौ जैमिनिमुने: प्रश्नं मार्कण्डेयस्योत्तरं प्रारब्धम् ।आदौ चंद्रवंशीय राजा राज्ञीनाञ्च वर्णनं प्रकान्तम् । पञ्चाध्याये द्रौपद्याः पंचपतीत्वकारणं निगदितम् । अत्रैव प्रसंगे चंदवंशे प्रथितस्य यदुकुलस्य श्रीकृष्णाग्रजस्य महत्याजनितपापप्रक्षालनकथा वर्णिता । ततश्च क्रमेण वंशवर्णनप्रक्रमे सूर्यवंशस्य महान् सत्यवादी राजो हरिश्चन्द्राख्यानं निगदितम् । कार्तवीर्यार्जुनकथया तस्य वंशस्योपाख्यानमपि दृश्यते । ततश्च ब्रह्माण्डस्य ब्रह्मणश्चोत्पत्ति कथनं वंशवर्णने उपयुक्तं दृश्यते ।

---

1• वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ।।
(अ०को02/4/160)

27

मन्वन्तराणां निरूपणं मनूनान्वाख्यानं तदनन्तरं दृश्यते । ततः देव्यास्तवनमाहात्म्येन दुर्गादेव्या उत्पत्तेराख्यानं तया सह देवीनाञ्च वंशोद्भवाख्यानं सुपपन्नम् । तदनु मधु-कैटभ-महिषासुर-शुम्भ-निशुम्भ-धूम्रलोचन-चण्ड-मुण्ड-रक्तबीजप्रभृतिः राक्षसदानवादीनां वर्णनमुपपन्नम् । अष्टनवति सर्गे राजवंशानुकीर्त्तनं सवदेवभयमार्तण्डस्योत्पत्तेराख्यानं समुपपन्नम् । पुनश्च दक्षप्रजापतेःसृष्टिकथनम्, राज्यवर्धनवंशवर्णनम्, वंशानुक्रमस्य कथनं सम्वृत्तम् । अत्र क्रमे इक्ष्वाकोर्नाभागः ततो रिष्टो ततश्च नरिष्यन्तः इत्युक्तम् ।

एवं मूलतो मार्कण्डेयपुराणे वंशान्वाख्यानं स्वल्पतरमेव दृश्यते, परं यदाख्यानमुपलभ्यते तन्नितान्तं मौलिकं रहस्यगुम्फितं, भक्तिभावभरितमेवेति तत्तत्त्वविद्भिर्भवेज्ञेयम् ।

---

1. मन्वन्तराधिपो विप्र यस्य सप्तममन्तरम् ।
   इक्ष्वाकुर्नाभगोरिष्टो महाबलपराक्रमः ॥
   नरिष्यन्तोऽथ नाभागः पृषध्रो धृष्ट एव च ।
   एते पुत्रा मनोस्तस्य पृथगाज्यस्य पालकाः ॥ [मा०पु० 108/4-5]

   इला नाम समुत्पन्ना मनोः कन्या सुमध्यमा ।
   तां दृष्ट्वा कन्यकां तत्र समुत्पन्नां ततो मनुः ॥तत्रैव 108/8

   इला समभवत् सद्यः सुद्युम्नःइति विश्रुतः ।
   पुनश्चेश्वरकोपेन मृगयामहता वने ॥ तत्रैव 108/12

28

मन्वन्तराणि-

यः समस्ते भूतले स्वाधिपत्यं स्थापयित्वा [illegible] स्वविधानेन समग्राया भुवः शासनं करोति स मनुशब्देन उच्यते । तथा तस्य विधानं तथा वंशपरम्परायाः शासनञ्च यावत् कालं प्रचलति स कालः मन्वन्तरशब्देनोच्यते । अयं कालः किञ्चिदधिकः एकसप्ततिचतुर्युगी समः उच्यते । एकस्य मन्वन्तरस्य अवधिः मनुष्यवर्षस्य मानात्[1] 306720000 भवति ।

अस्य मानस्य चतुर्दशमन्वन्तराणि ब्रह्मणः एकेन दिनेन व्यतीतानि भवन्ति ।[2]

प्रतिमन्वन्तरं देवाः सप्तर्षयः, इन्द्राः, मनवः राजवंशाश्च परिवर्तिता भवन्ति ।[3]

---

1· मन्वन्तराणां संख्याता साधिका ह्येकसप्ततिः ।
मानुषेण प्रमाणेन शृणु मन्वन्तरं च मे ।
त्रिंशत्कोट्यस्तु संख्याताः सहस्राणि च विंशतिः ।
सप्तषष्टिस्तथान्यानि नियुतानि च संख्यया ।। [मा०पु०50/3-4]

2· ब्रह्मणो दिवसे ब्रह्मन् मनवः स्युश्चतुर्दश । [मा·पु·43/3-4]

3· देवाः सप्तर्षयः सेन्द्रा मनुस्तत्सूनवो नृपाः ।
मनुना सह सृज्यन्ते संह्रियन्ते च पूर्ववत् ।। [मा०पु०43/35]

29

इमानि चतुर्दश मन्वन्तराणि -

स्वायम्भुवः, स्वारोचिषः, औत्तमः, तामसः, रैवतः, चाक्षुषः, वैवस्वतः, सावर्णिः, दक्षसावर्णिः, श्रीमान्-ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, रौच्यः भौत्यश्च ।

नानाविध मन्वन्तराणां वर्णनमत्र पुष्कलेन दृश्यते । स्वायंभुवमन्वन्तरवर्णनं पञ्चाशत्तमो ऽध्याये, स्वारोचिषमन्वन्तरवर्णनं अष्टपञ्चाशत्तमो ऽध्याये, उत्तमः सप्तसप्ततितमो ऽध्याये, तामसः, एकसप्ततितमो ऽध्याये, रैवतः द्विसप्ततितमो ऽध्याये चाक्षुषः त्रिसप्ततितमो ऽध्याये, वैवस्वतः षट्सप्ततितमो ऽध्याये सावर्णिः, सप्तसप्ततितमो ऽध्याये दक्षसावर्णिः -

ब्रह्मसावर्णिः - धर्मसावर्णिः,

रुद्रसावर्णिः - रौच्यः

भौत्यमन्वन्तराणाञ्च कथनं एकनवतितमो ऽध्याये प्राप्यते ।

---

1· स्वायम्भुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा ।
औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
षडेते मनवो तीतास्तथा वैवस्वतो धुना ।
सावर्णिः पञ्चरौच्यश्च भौत्यश्चागामिनस्त्वमी ॥
{मा०पु०50/6-8}

30

वंशानुचरितम्-

अत्र पूर्वप्रकरणे वंशवर्णनसहितं मन्वन्तराख्यानं मया सिंहा-वलोकनन्यायेन विहितम् । अत्र तदुतैव वंशानुचरितं वंशानुक्रमो वा किंचन् निरूप्यते । यद्यपि मार्कण्डेयपुराणमतीवगभीरविषयानधिकृत्य साधनाशास्त्रं योगशास्त्रञ्च पुरस्करोति । अतः वंशादिकीर्तनं पुष्कलेन नात्र प्रतिष्ठते । तथापि पुराणलक्षणमनुसृत्य यत्र-तत्र वंशानुकीर्तनं कृतमस्ति । अत्र पुराणे क्रमबद्धं कोऽप्याख्यानं नातिविस्तरेण समधिगतम् । तत एव द्वि-त्रिप्रसंगानुद्धरामि वंशानुचरिताख्याने अत्र पुराणे महाप्रताप-वतो सूर्यवंशस्य देदीप्यमानस्तंभस्य हरिचन्द्राख्यानस्य प्रसंगं परिकल्प-यामि । हरिश्चन्द्राख्यानं तु सत्यधर्मो प्रतिष्ठापनाय जगत् प्रसिद्धम् । अनेकपुराणेष्वपि प्रसंगो यं सविस्तरं स्थानं[1] बिभर्ति । मार्कण्डेयपुराणे अष्टमा ध्याये संक्षेपेणैवानुकीर्तितम् ।

हरिश्चन्द्रः एकदा आखेटार्थं वने मृगमनुसरन्नधावत् ।[2] गहने वने स्त्रीणांभेकलःकरुणक्रन्दनमाकर्ण्य स्त्रयः संकटापन्ना: इति विभाव्य

---

1° हरिश्चन्द्रेति राजर्षिरासीत् त्रेतायुगे पुरा ।
धर्मात्मा पृथिवीपालःप्रोल्लसत्कीर्तिरुत्तमः ।।
न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम् ।
नाधर्मरुचयः पौरास्तस्मिन् शासति पार्थिवे ।।
[मा०पु०7/1-2]

2° को यं बध्नाति वस्त्रान्ते पावकं पापकृन्नरः ।
बलोष्णतेजसा दीप्ते मयि पत्यावुपस्थिते ।।
[मा•पु• 7/12]

तद् दिश्येवाऽथावत । पत्नीवचनेन क्रुद्धं विश्वामित्र मुनिं परिसान्त्वयामास ।[1]

पुनश्च तस्मै प्रशमनाय वरं प्रायच्छत् ।[2] सन्तुष्टो विश्वामित्रःदानस्य भूयसीं दक्षिणां ययाच । राजा च स्वपुत्रपत्नीसहितमात्मशरीरं निवेदयामास ।[3] अन्ते महापुराणे हरिश्चन्द्राख्यानस्य फलश्रुतौ राजा हरिश्चन्द्रसदृशं नान्यच्चरित्रमिति प्रतिपाद्य कथाश्रवणफलप्रतिपादनम् ।[4]

---

1. दातव्यं रक्षितव्यञ्च धर्मज्ञेन महीक्षिता ।
चापञ्चोद्यम्य योद्धव्यं धर्मशास्त्रानुसारतः ।। [मा०पु०7/18]

2. उच्यतां भगवन् यत्ते दातव्यमविशङ्कितम् ।
दत्तमित्येव तद्विद्धि यद्यपि स्यात् सुदुर्लभम् ।।

हिरण्यं वा सुवर्णं वा पुत्रः पत्नी कलेवरम् ।
प्राणा राज्यं पुरं लक्ष्मीर्यदभिप्रेतमात्मनः ।।

[मा०पु०7/23-24]

3. अवशिष्टमिदं ब्रह्मन्नद्य देहत्रयं मम ।

[मा०पु०7/55]

4. हरिश्चन्द्रसमो राजा न भूतो न भविष्यति ।
यः शृणोति स्वदुःखार्त्तःन सुखं महदाप्नुयात् ।।

स्वर्गार्थी प्राप्नुयात् स्वर्गं पुत्रार्थी पुत्रमाप्नुयात् ।
भार्यार्थी प्राप्नुयाद्भार्यां राज्यार्थी राज्यमाप्नुयात् ।।

अहो तितिक्षामाहात्म्यमहो दानफलं महत् ।
यदागतो हरिश्चन्द्रः पुरीन्द्रत्वमाप्तवान् ।।

[मा०पु०8/278-279-280]

32

पुनरत्रो पुराणे जन्मस्थितिविषये सृष्टिविषये लोक-परलोकविषये कर्मविपाकविषये यमलोकादियातनादि विषये च वर्णनानि सम्पन्नानि ।[1] ब्रह्माण्डस्योत्पत्तौ ब्रह्मण उत्पत्ति-र्निगदिता ।

एतदनन्तरं सांख्यदर्शनमनुसृत्य प्रकृति-विकृतीनां वर्णनं वंशानुचरितान्वाख्यानमूलकं दरीदृश्यते ।

एवञ्च द्वादशमन्वन्तर मनूनामुत्पत्त्याख्यानेन चतुर्दशमन्वन्त-राणांमूलवंशानुकीर्तनं येनेयं सृष्टिरद्यापि पुष्पिता: पल्लविता: फलीताश्च दरीदृश्यते । तेषां वर्णनं अतिगहनेन विधिना तत्र-तत्र मुनिना मार्कण्डेयपुराणे कृतमिति ।

मार्कण्डेयपुराणे अष्टनवतितमो ध्याये राजवंशानुकीर्तनेन कल्पितम् ।[2] परं नैतेनान्यपुराणवंशानुचरितमेव वर्णनमत्र दृश्यते इति तस्मात् वंशवर्णने वंशानुचरितवर्णने च पुराणमिदं स्वतन्त्रपुराणलक्षणमेव साधयति , न तु वंशानुचरितमिति सुधीय एव प्रमाणमिति शम् ।

---

1. ब्रह्माणमादिपुरुषमुत्पत्तिस्थितिसंयमे ।
यत्कारणमनौपम्यं यत्र सर्वं प्रतिष्ठितम् ।।
तस्मै हिरण्यगर्भाय लोकतन्त्राय धीमते ।
प्रणम्य सम्यग्वक्ष्यामि भूतवर्गमनुत्तमम् ।। [मा०पु०42/28-29]

2. ब्रह्मा प्रजापति:पूर्वं सिसृक्षुर्विविधाप्रजा: ।
अंगुष्ठाद्दक्षिणाद् दक्षमसृजद् द्विजसत्तम ।।
वामांगुष्ठाच्च तत्पत्नीं जगत्सूतकरी विभु: ।
ससर्ज भगवान्ब्रह्मा जगतां कारणं परम् ।। [मा०पु०98/9-10

33

## मार्कण्डेयपुराणस्य वर्ण्यविषया:

मार्कण्डेयपुराणं कियत् अध्यायात्मकं कियत् च श्लोकसंख्याकमिति विषये सन्ति किल बहवो मतभेदा:। परमस्य प्रामाण्यविषये नास्ति केषामपि प्राच्यप्रतीच्यविदुषां मतभेद:। पुराणस्यास्य वक्ता महामुनिर्मार्कण्डेय इति।[1] तत्र मार्कण्डेयपुराणवर्ण्यविषय प्रस्तावादादौ प्रश्नो यं समुदेति यत् कियदीयत्ताकमिदं पुराणं मार्कण्डेयमिति। तदत्र किंचिदुच्यते।

तथा हि मत्स्य, नारद, ब्रह्मवैवर्त, श्रीमद्भागवतानुसारं मार्कण्डेयपुराणे नवसहस्रसंख्याका:श्लोका: भवितव्या। परमधुना उपलब्धेषु प्रकाशितेषु च मार्कण्डेयपुराणग्रन्थेषु 2100श्लोका:न्यूना: वर्तन्ते। तस्मादधुना 6900 श्लोका:उपलभ्यन्ते। अत्र श्लोकेषु समग्रे मार्कण्डेयपुराणे 137 वर्तन्ते किलाध्याया:। नारदीयपुराणस्य विषयानुक्रमणिकया प्रतीयते यदत्र नरिष्यन्तचरित्रानन्तरमपि इक्ष्वाकुचरित्र-तुलसीचरित्र-श्रीकृष्णबालचरित-रामकथा-सोमवंशीयपुरूरवा-नहुष-ययाति चरित्र-सांख्यतत्त्वविवेचन-प्रपञ्चसत्त्व-मार्कण्डेयचरित्रवर्णनमासीत्, परं साम्प्रतं उपलब्धासु प्रकाशितासु च मार्कण्डेयपुराणप्रतिषु नरिषचरित्रानन्तरं दमस्याख्यानानन्तरं प्रस्तुत्य मार्कण्डेयपुराणस्योपसंहारात्मकै: श्लोकै: सह ग्रन्थसमाप्तिर्जायते। इत: अन्वेषणीया अंशा: इदानीं यावत् प्रकाशितमार्कण्डेयपुराणप्रतिषु नोपलभ्यते। अन्ये एषां चरित्राणां संकलनेन मार्कण्डेयपुराणस्योपर्युक्त पुराणानुसारं नवसहस्राणि श्लोका:परिपूर्णानि

---

1. यत्र वक्ता भवत् स्वयं मार्कण्डेयो महामुनि:।
मार्कण्डेयपुराणं हि तदाख्यातं च सप्तमम्॥ (ना०पु०)

34

स्युः ।

यद्यपि साम्प्रतमुपलब्धं मुद्रितञ्च मार्कण्डेयपुराणं परिच्छिन्नावशिष्टमस्तीव, परं नारदीयपुराणस्य सूच्यनुसारमिदं पुराणं इक्ष्वाकोः कुलपर्यन्तं कुरुवंशं प्रारभ्य श्रीकृष्णचरित्रपर्यन्तं च सम्यक् विधाय समाप्तिमेष्यति । अतो निश्चीयते यदस्यावसानिको भागो नूनं लोपं गतः । केचित्तु अद्यतनीयाः समालोचकाः एकस्वरेण संगिरन्ते। यदस्य पुराणस्य प्राप्योंऽशो यथावदेवास्ति, यमाधारीकृत्य लोकाः मार्कण्डेयपुराणे प्रभवन्ति इति । पुराणमिदं जैमिनेः महाभारतसम्बन्धिप्रश्नः मार्कण्डेयमुनेश्च वपुः अप्सरायाः शापकथनं, कटकोत्पत्तिः, शमीकमुनेश्च सन्निकटे पक्षिणां स्वशापवृत्तान्तकथनं तेषां विन्ध्याचले गमनं च घटके: जैमिनेः महाभारतविषयकचतुर्णां प्रश्नानां वृत्तान्तः पक्षिणां च भगवतः चतुर्व्यूहावताराणां कथनं जैमिनेश्च प्रथमप्रश्नस्योत्तरं द्रौपद्याः पंचपतीनां कारणं, इन्द्रविक्रियायाश्च कथनं, बलरामस्य ब्रह्महत्यामूलकपापप्रक्षालनार्थं तीर्थयात्रायाः कारणवर्णनं, द्रौपद्याः अविवाहितपंचपुत्राणां निधनकारणवर्णनम् राज्ञो हरिश्चन्द्रोपाख्यानम् आडिबकस्य युद्धवर्णनम्, प्राणिनां जन्मादिविषयकप्रश्नः, पितापुत्रसम्वाद-द्वारा मृत्युदशायाः वर्णनम् जन्मस्थितिसंसारदुःखानां वर्णनम्, नरकाणां विवरणम्, यमदूतानां प्रति विदेहराज्ञो वार्ता, कर्मफलजनितनरकयातना-वर्णनम्, कर्मणा विपाकः प्राप्तिनान्त नरकेण मुक्तिकथनम्, पतिव्रतायाः माहात्म्यम्, अनुसूयायाश्च वरलाभः, चन्द्रदुर्वासदत्तात्रेयाणां चोत्पत्तिः, कार्तवीर्यार्जुनं प्रति गर्गमुनेरुपदेशः, दत्तात्रेयाख्यानकथनम्, कार्तवीर्यार्जुनं प्रति दत्तात्रेयस्यानुग्रहः, मदालसोपाख्याने कुवलयाश्वप्राप्तिः,

35

कुवलयाश्व प्राप्ति:, कुवलयाश्वस्य पातालगमनम्, मदालसापरिणय:, सैनासहितस्य पातालकेतुदैत्यस्य वध:, कुवलयाश्वं तालकेतुना वंचनम्, मदालसया वियोगश्च, तत्प्रभावेण अश्वतरं मदालसाप्राप्ति: कुवलयाश्वस्य च पाताले नागराज:समीपगमनम्, कुवलयाश्वस्य च पाताले नागराज: समीपगमनम्, कुवलयाश्वाय मदालसा प्राप्तिरित्यादि वर्णनानुवर्णनं कथनपूर्वकं वर्णाश्रमाणां नानाविधश्राद्धानां च वर्णनम्, प्रणवस्वरूपनिरूपणम्, नानाविधसृष्टितत्त्वे मन्वन्तर-द्वीपवनपर्वतादिवर्णनपुरस्सरं गंगाया अवतरणम्, भारतवर्षस्य च विभाग: इत्यादि वर्णनसहितं नानाविध मनूनां मन्वन्तराणां व्याख्यानपूर्वकं सावर्णिकमन्वन्तराख्यानपुरस्सरं भगवत्या: जगदम्बिका दुर्गाया: माहात्म्यवर्णनपूर्वकं मधु-कैटभ-महिषासुर-शुम्भनिशुम्भादि राक्षसाणां वध:, शक्रादिभिर्देव्या: स्तवनम्, भगवतीद्वारा देवानां वरप्रदानम्, सुरथसमाधयोश्च यथेच्छवरप्राप्ति: अन्यमन्वन्तराणां रवेर्व्याख्यानं रविविषयकनानाविधस्तुतय:, अदिते:गर्भात् आदित्यस्यावतार:, विभिन्नराज्ञां सूर्याराधनवृत्तान्त:, अविक्षिताख्यानम्, मरुत्ताख्यानम्, नरिष्यन्तचरित्रादिकं च महातात्पर्यरोहेणास्मिन् पुराणे निगदिता: सन्ति । एषां वर्णनेन ये हि भावा:अस्य पुराणस्य सारत्वेन मम हृदि परिस्फुरन्ति, ते केश्चिद् शब्दै: मया प्रस्तूयन्ते ।

अथवाधेयं मार्कण्डेयपुराणस्य रचना किल त्रिस्तरीया: वर्तते । तत्र प्रथमस्तरे प्रथमाध्यायारभ्य द्विचत्वारिंशत् [42] अध्यायपर्यन्तं श्रोता वक्ता च पक्षीजैमिनि वर्तते ।द्वितीयस्तरे त्रिचत्वारिंशत् [43] अध्यायारभ्य अशीत्यध्यायान्तं वक्ता मार्कण्डेयमुनि: श्रोता च कौष्टुकि:स्त:। एवमेव तृतीयस्तरे एकाशीत्यध्यायादारभ्य

36

विभक्त्यध्यायान्तं त्रयोदशाध्यायेषु सुरथसमाधिश्च वक्ताश्रोतारौ आस्ताम् । इमौ वक्ताश्रोतारः परस्परं असम्बद्धा अपि प्रश्नोत्तर-मुखेन ऐकत्वस्थापनम् मार्कण्डेयपुराणे दृश्यते ।

लोकप्रसिद्धाया दुर्गासप्तशत्या आख्यानं नूनं अस्यैव पुराण-स्यैको विद्यते किल महत्त्वपूर्णो अंशः। यत्र जगज्जनन्या सर्वस्वरूपाया आदिशक्तेःदुर्गादेव्याः पवित्रं रुचिरं चरित्रं विशदतया चित्रितमस्ति। यत्र देवाद्वारा मधु-कैटभ-चण्डमुण्ड-शुम्भनिशुम्भादीनामसुराणां वधकथा कथितास्ति । मार्कण्डेयपुराणस्य 78-90 अध्यायपर्यन्तं 13 अध्याया दुर्गासप्तशतीनाम्ना पृथक् प्रकाशितं वर्तते सर्वत्र चोपलभ्यते पि । कलियुगे सकलकामनापूर्तये अयमंशो विशेषरूपेणो पादेयःवाञ्छासाधकस्या-भिमतो स्ति । एवं सर्वैरास्तिकजनैःश्लाघनीयःश्रद्धेय उपादेय सततमभ्य-सनीयश्चास्ति ।अस्यांशस्य पाठकरणेन सर्वे मनोरथा नूनं सिध्यन्ति। सम्पत्तौ विपत्तावपि अस्य पाठकरणं श्रेयस्करं भवति । विशेषतः आश्विन-चैत्रमासयोःनवरात्रयोःसमेषां हिन्दूनामास्तिकानां गृहे-गृहे स्वस्वेष्टसिद्धये दुर्गासप्तशती पाठो भवति । वस्तुतः "कलौ चण्डी-विनायकौ" इत्यनुसारं सर्वकार्यसिद्धये श्रद्धापूर्वकं दुर्गादेव्या आराधना परमावश्यकास्ति ।

अस्य तत्त्वस्य महत् विज्ञानं तन्त्रागमशास्त्रेषूपलभ्यते । सांख्ययोगदर्शने पि प्रकृतेःस्वरूपनिरूपणं भगवत्याः आद्याशक्तेःमूल-प्रकृतेश्च स्वरूपोद्घाटकमेव । रहस्यगर्भितेःशाक्तोपासनक्रमे च सुरथ-सुमेधसोर्मुक्तिमुक्तयोश्च समाराधकजनानां उभयविध धर्मार्थकाममोक्ष-साधकत्वम् आख्याने उपनिबद्धन् ।

37

अनन्तगुणगरिमामण्डितायाः जगदम्बायाः सरस्वरजलतमः प्रधानभूतायाः श्रीमहाकाली-महालक्ष्मी-महासरस्वतीदेव्याः स्वरूपोपबृंहणं भारतीयसंस्कृतेः जीवनदर्शनस्य च महद्गौरवास्पदं वस्तु । अस्याः विधेः सम्यक् परिपालनं वेदमारभ्य रामायणमहाभारतपुराणेषु सर्वत्रैवानुस्यूतं दृश्यते । मन्ये भगवान् मार्कण्डेयः साम्बशिवस्य समाराधनेन यत् तत्त्वं समधिगतम् , तदेवात्र पुराणे त्रयोदशाध्यायेषु स्वात्मानुभवं प्रकाशितम् । नूनमेतत् भारतवर्षस्य महद्गौरववर्धनाय महामंगलप्रदायकं शास्त्रमिति विद्भिरवगन्तव्यम् ।

मार्कण्डेयपुराणे वर्णितोऽयं भगवत्याः समाराधनाख्यानतुल्यमेव सतीमदालसायाः भारतीयायाः सतीसाध्वीआदर्शनारीरूपेण निरूपितम् । एतच्च पावनचरित्रम् पुराणे महता विस्तरेण प्रदर्शितं विद्यते । सतीमदालसा स्वपवित्रोपदेशेन प्राथमिकाः त्रयः पुत्राः ईश्वरभक्ता अजायन्त । चतुर्थः अलर्कनामा पुत्रस्तस्या मदालसायाः ज्ञानयोगमुपदेशेन समर्थेन भूपालो भूत्वापि राजयोगी बभूव । एतादृश्या मदालसायाः पवित्रं चरित्रचित्रणं नूनं विश्वजनीनमिति नोपेक्षितव्यं सुधीभिः । एवमत्र पुराणे कथाप्रारम्भः पक्षिद्वारा महाभारतयुद्धसम्बन्धीनां प्रश्नानां समाधानाय प्रवृत्तः। तदनु नानाविधानां पूर्वापरस्थापितात्मनां लौकिका नानाश्रमवर्णाश्रमाचार सम्बन्धिविचाराः पुराणेऽत्र लोकाभ्युदयमंगलमण्डनाय वर्णिताः। कर्मफलव्याख्यान द्वारा नानाविधानां रागद्वेषकामक्रोधादिजनितानां पापानां सम्यक् वर्णनमुपस्थाप्य तद् द्वारा प्राप्यमाणानां विभिन्ननरकाणां नरकयातनाञ्च वर्णनेन लोकं स्वधर्मकर्मपालनाय पुराणमिदमादिशति ।

38

खलु लौकिक पारलौकिक नानाविधविषयनिरूपणेष्वपि सत्योदात्त-
चरित्राणां श्रीराम हरिश्चन्द्रप्रभृतिः भारतीयमहापुरुषाणां चरित्र-
स्थापनेन पुराणमिदं भारतीयगौरवरक्षणायास्मान् उपदिशति ।
विभिन्न योगानां योगसिद्धीनां मन्वन्तरादीनाञ्च वर्णनं पुराण-
स्यास्य वैज्ञानिकमूल्यं प्रतिष्ठापयति । मासे तु किमाकलं समग्रे
भारते अतीवादरतया स्वीक्रियते । अन्येषां पुराणानां विषयवर्ण-
नधिया यदि समीक्षा करणीया भवेत्, तर्हि शाक्तोपाख्यानेन तद्
द्वारा सुमेधासुरथयोः तात्त्विकस्वरूपनिष्पादनद्वारा देव्याराधनेन
लोकपरलोकं सिद्ध्यतीति पुराणस्यास्य संदेशं कथमपि विस्मर्तुन्न
शक्यते इति दिक् ।

## मार्कण्डेयपुराणे दर्शनशास्त्रचर्चा

दर्शनशब्दो हि भ्वादिगणपठितात् "दृशिर प्रेक्षणे"
इति धातोः करणार्थे ल्युट्प्रत्यये कृते सति निष्पद्यते । अतःफलि-
तार्थो भवति "दृश्यते अनेन इति दर्शनम्"। अनया व्युत्पत्त्या किं
दृश्यते केन दृश्यते इति जिज्ञासायामुत्तरं भवति । यत् दृश्यते येन
दृश्यते तदेव दर्शनशब्दो न पारिभाषिकः एवं दर्शनं चक्षुरिन्द्रियद्वारा
प्रत्यक्षं भवति, परमयमर्थो नात्राभिप्रेतः।अत्राभिप्रेतार्थस्तु ज्ञानबलेन
अनुभवबलेन आन्तरदृष्ट्या च यद् किञ्चिद् दृश्यते अनुभूयते वा तदेव
दर्शनमिति । अतः भारतीयतत्त्वज्ञाः विभिन्नज्ञानदृष्ट्या यद्-यद्
तत्त्वं दृष्टमनुभूतं च तदेवास्तिकनास्तिकदर्शनत्वेन कथितं भारतीय-
वाङ्मये । दृष्टिभेदात् भिन्नत्वं सहजमिति कृत्वा दर्शनभेदाः संगच्छन्ते

वस्तुतस्तु लौकिकदु:खानां ऐहिकात्यन्तिक नाशबुद्धया यदि उपायमनुष्ठीयते, तदेव दर्शनपदेनोच्यते सांख्यै:। सांख्ययोग: तन्त्रागम-शैव-वैष्णव-गाणपत्य-बौद्ध-जैनादयो दार्शनिका: तत्त्व-ज्ञानद्वारा परतत्त्वापादनाय स्व-स्व शास्त्रानुसारं व्यवस्थाम-नुष्ठीयन्ते । मीमांसकास्तु अपूर्वकर्मण:यज्ञानुष्ठानादि क्रियाभि: अपूर्वोत्पादनद्वारा दर्शनत्वमधिगच्छन्ति । नैयायिक-वैशेषिकाश्च पदार्थविवेकद्वारा परमार्थतत्त्वमधिगच्छन्ति । वेदान्तिनश्च केवलं ब्रह्मरूपमेवाद्वयतत्त्वं प्रतिष्ठापयन्त:प्रपञ्चात्मकं जगत् मिथ्यातत्त्वं संसाराभ्यन्तरञ्च ब्रह्मातिरिक्तं "नेह नानास्ति किञ्चन्"इति श्रुति-बलेनाद्वयत्वं प्रतिष्ठापयन्ति । आधुनिका:रामकृष्ण परमहंस:, महर्षिअरविन्द:,स्वामी विवेकानन्द:,महात्मा गांधी,रामतीर्थ-स्वामी,महर्षि दयानन्दादयो भारतीयदार्शनिकाश्च प्राक्तनं दर्शन-सिद्धान्तमेवाश्रित्य देशकालपरिस्थितिवशेन समाजस्यं स्थाप्य युगानुरूपं स्व-स्व सिद्धान्तं दिशयन्ति । पाश्चात्या: सुकरात-अरस्तु-ग्रीस्त लेनिन-कालमार्क्सप्रभृति: दार्शनिका: स्व-स्व दर्शनसिद्धान्तेषु प्राक्तन् भारतीयदार्शनिकसिद्धान्ताननुमेल्य दृष्टिभेदेन क्वचित्-क्वचित् साम्यं वैषम्यं चोपस्थाप्य यत्र तत्र स्व-स्व सिद्धान्तं स्थापनयत्नपरा दरीदृश्यन्ते । एवं सत्स्वपि प्राङ्नव्यदर्शनदृष्टिभेदेषु सर्वेषां प्रज्ञावतां एकैव तत्त्वं जागतिकदु:खनिवृत्यर्थं स्वीकृतये तत्परा परिलक्ष्यन्ते । तदिह भारतीयाभि:युक्तवचोभि: "नृणामेको गम्यस्त्वमसि पयसा मर्णवमिव "इति अनुभूयते । तथा सति दार्शनिकदृष्ट्या विचारजाते प्रसृते ऽपि सकलदर्शनविचारजगत उत्थापनबीजं महासागरोपम: साहित्ये पुराणेष्वेव प्राप्यते । तस्मात् पुराणानि दर्शनतत्त्वो-स्थापक प्रस्थानानीति न केनापि तिरस्कर्तुं शक्यते । तद् धिया दर्शनतत्त्वनिरूपणे मार्कण्डेयमहापुराणस्यापि महत् महत्त्वमवगीयते ।

40

मार्कण्डेयनाम एव किञ्चिद् विलक्षणं तत्त्वमुद्भावयति। मृकण्डोरपत्यं मार्कण्डेय इत्यर्थे श्रीमद्भागवदाख्यानानुसारेण बाल्यावस्थायामेव आयुष्प्राप्त्यै मार्कण्डेयस्य घोरतपश्चर्या श्रूयते । अद्यत्वे काश्या:मार्कण्डेयमहादेवधाम्नी एतत्कथापि साक्षात् मूर्त इव दृश्यते । शैव-वैष्णवदर्शनतत्त्वविदस्तु जानन्त्येव यत् शक्तिं विना शिव:,लक्ष्मीं विना विष्णुश्च कदापि एकाकी एव प्रतिष्ठां न लभते । अयमेव भाव: नर्मदेश्वराधन-शालिग्रामशिलाराधनेषु च तु अभिव्यक्त:। तदुक्तं तन्त्र-शास्त्रेषु[1] न शिवेन विना शक्ति:, न शक्तया विना शिव:। तयो: परस्परं भाव: वह्ने: दाहकता इव । किञ्च चन्द्र-चन्द्रिका इव ब्राह्मण-ब्राह्मणत्व इव तयोरभेद इति सुधीनां निर्णय:। इदमेव तत्त्वं साकल्येन शैवदर्शने,शाक्तदर्शने ,वैष्णवदर्शने च सर्वत्रोपपन्नमिति ।

देवीतत्त्वमीमांसा-

मार्कण्डेयऋषि: खलु तत्त्वदर्शी इति भारतीया मनीषा । अत: मार्कण्डेयऋषेरार्षतत्त्वम् मार्कण्डेयपुराणे पि सुपपन्नम् । यद्यपि अत्र पुराणे नानाख्यानै: सह नारदऋषे: तपश्चर्या महतो राज्ञ: हरिश्चन्द्रस्य सत्यनिष्ठा, नरकयातनादीनां वर्णनं ,कार्तवीर्यार्जुनं

---

1. शिव:शक्तया युक्तो यदि भवति शक्त:प्रभवितुं ।
न चेदेवं देवो न खलु कुशल:स्पन्दितुमपि ।।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि ।
प्रणन्तुं स्तोतुं वा कथमकृतपुण्य: प्रभवति ।।
[सौ०ल०।]

प्रति दत्तात्रेयस्यानुग्रहः, सदाचारश्राद्धयोगाङ्गानां, योगसिद्धीनाञ्च वर्णनम्, प्रणवस्य वैशिष्ट्यकथनं, मन्वन्तराणां द्वीपपर्वतादीनाञ्च विशिष्टं वर्णनं, सविस्तृततत्त्वनिरूपणं महता सतत्त्वनिरूपणेन निरूपितम् । तथापि यदि देवीतत्त्वमीमांसा महापुराणरत्ने न समधिगता । नूनं तस्य तोलनं केनापि महापुराणेन भवितुन्नार्हति । समग्रे हि भारते हिमाचले कश्मीरतो बंगप्रदेशं यावत् मार्कण्डेयपुराणान्तर्गतं दुर्गासप्तशती तावत्त्व-मव्याहतं समादरं समधिगच्छति । लौकिक-पारलौकिकसमग्रसिद्धीनां पुंजिकारूप मिदं दुर्गासप्तशतीतत्त्वं भारतीयशाक्ताराधनस्य मूलमस्ति। अतः मार्कण्डेयपुराणान्तर्गत एकाशीत्यध्यायादारभ्य त्रिनवत्यध्या-न्तेषु त्रयोदशाध्यायेषु या देवीतत्त्वमीमांसा समधिगता सैव दुर्गा-सप्तशतीति नाम्ना प्रसिद्धा । एतदेवाभिलक्ष्य विविच्यते किञ्चित् -

मया त्र स्वशोधप्रबन्धे उपरि निगदितं यत् शिवःशक्त्या-भिन्नः, तस्माद् शिवाराधनेन शक्तेरपिराधनं सुतरां सम्पद्यते । एवमेव शक्तेराधनेन शिवस्याप्याराधनं सुतरामेव संगच्छते । मार्कण्डेयऋषेः आयुः कामनया घोरतरं शिवस्याराधनं सर्वत्र प्रथितम् साहित्ये पुराणे लोकेषु च । अतः मार्कण्डेयपुराणान्तर्गत शक्तेराराधनं प्रकारा-न्तरेण शिवाराधनमेव सम्पद्यते । अतः एतद् तत्त्वनिरूपणधिया शक्तितत्त्वमीमांसा मार्कण्डेयपुराणान्तर्गतं नूनं कमु महत्त्वमादधते ।

42

## (क) मार्कण्डेयपुराणे महाकाल्याः स्वरूपम्

मार्कण्डेयपुराणान्तर्गतं शक्तितत्त्वनिरूपणं त्रिधा समुपलब्धम् -

प्रथम-मध्यम-उत्तमं चरित्रभेदादिति । प्रथमे चरित्रे हि यत्र सर्वशक्तिमत्याः, जगज्जनन्याः पराम्बायाः कालीरूपेणान्वाख्यानं समधिगतम् । काली हि विसर्गसृष्टिः संहारकर्त्री च । "कल=कलने" "कल=विक्षेपे" इति धातोः निष्पन्नः कालीशब्दः महाकालस्य शिवस्य पत्नीत्वेन निष्पन्नः । परमेश्वरः शिवः अनयैव महाकालशक्त्या युतः सन् संसारस्य सृष्टिजातस्य संहारकर्ता इति आख्यायते । "कल-कलने" धातोः सृष्ट्यर्थे कला शब्दो निष्पद्यते । शैवदर्शने सांख्यदर्शनस्य पंचविंशतितत्त्वान्तरमेकादशतत्त्वानि सम्मिल्य षट्त्रिंशत् (36) तत्त्वानि जायन्ते । तानि च यथा-शिवः, शक्तिः, सदाशिवः, ईश्वरः शुद्धविद्या इति शुद्धपंचतत्त्वानां शुद्धसृष्टिः शाक्ताण्डपदेनोच्यते नियति वर्याण्डे च माया (अविद्या)-विद्या-राग-काल-कला नियति इति षट्तत्त्वानि समुपयुज्यन्ते । तत्रच सांख्यदर्शनानुसारं 25 तत्त्वानि । यथा पुरुषः (स्वतन्त्रः) ज्ञानरूपः, बहवश्च, प्रकृतिः, महत्तत्त्वम्, (बुद्धितत्त्वम्) अहंतत्त्वम् "अहंकार" पन्चज्ञानेन्द्रियाणि (चक्षु, श्रोत्रम्, घ्राणः रसना, त्वक्), पन्चकर्मेन्द्रियाणि (वाक्, पाद-पाणि-पायु-उपस्थाः, पन्चतन्मात्राः (रूपः-रस-गन्ध-स्पर्श, शब्दाख्याः) उभयात्मकं मनः (संकल्पकविकल्पात्मकः), पन्चभूतानि (पृथ्वी, अप-तेज-वायु-आकाश इत्येवं सम्मिलितानि षट्त्रिंशत्तत्त्वान्युपपद्यन्ते । अत्र मध्ये प्रकृतिमारभ्य अहंकारपर्यन्तं प्राकृताण्डमित्युच्यते । इन्द्रियाणि आरभ्य अहंकारपर्यन्तं प्राकृताण्ड पंचभूतपर्यन्तं पार्थिवाण्डमित्युच्यते । अतेव

43

अत्रेदं चिन्त्यम् यद् मायाण्डे व्यवस्थापिता कला एव भगवतः शिवस्य विसर्गशक्तिः शारदकलाविमर्शः सृष्टिर्वोच्यते । भगवती विसर्गशक्तिः कलाकाष्ठादिरूपेण निःसीम्नि जगति प्रसृता सति सृष्टिपदभाग् भवति । एवं महाकालः (शिवः) कालीशक्त्या सम्वलितः सन् प्रसृतां निःसीमसृष्टिं संकलयन्ति संहरति । सैव कलाशक्तिरिति भूत्वा निःसीमसृष्टिं उद्गिरन्ति विश्वविस्तारं साधयन्ति । एवं क्रमेण विचित्रमिदं जगत् नाशमासाद्य पुनरधिरोहति हसति च । एतत् गभीरशाक्तदर्शनसिद्धान्तः मार्कण्डेयपुराणे उपर्युक्त त्रयोदशा-ध्यायेषु अविरत दुर्गासप्तशतीरूपेण समुल्लसति ।

भगवत्याः अनन्तकोटिब्रह्माण्डाधीष्ठात्र्या राजराजेश्वरी त्रिपुरसुन्दर्याः अनन्तरूपायाश्च जगतः सृष्टिः स्थितिः संहारकारयित्वं रूपत्रयं विलसति खलु महाकाली महालक्ष्मी-महासरस्वतीरूपेण । देवीतत्त्वमीमांसा प्रकरणे मार्कण्डेयपुराणे सप्तशत्यान्व । शाक्तदर्शने दशमहाविद्यास्वरूपे महाकाली-महालक्ष्मी-महासरस्वत्याश्च स्वरूप-निरूपणमाराधनपद्धतिश्च निरूपिता वर्तते । सा काली या खलु संहारिका तस्यैव निरूपणं सर्जन शक्तित्वेनापि उपपन्नम् ।

समग्रं जगत् तस्यैव गर्भे मोहमापन्नं सत् मधुकैटभत्वमात्मन् विमोहितं सत् नाशत्वं कीर्तिमत्त्वञ्च लभते । अतः सा विविधरूप-मावहन्ती अपि काली । सा च स्वाहारूपमाधाय देवान् पुष्णाति असुरान् च संहरति इतरेभ्यश्च कव्यं स्वधारूपेण प्रयच्छति ।

---

1. जयन्ती मंगला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमो स्तु ते ।।
[अ०स०१०श्लोक-1]

अपराजेयौ विष्णुकर्णमलोद्भूतौ महाशक्तिसम्पन्नौ मधुकैटभौ स्व स्वापराजेय शक्त्या यदा समस्तं चराचरं तिरस्कुरुतस्तदा सा योगमाया स्वधारिणी सती असुरौ विमोह्य स्ववशौ नीत्वा देवत्व-रक्षार्थं तौ नाशयति ।[1] किञ्च स्वाराधकेभ्यः सा मनोनुकूलं वरं यच्छति । असम्भवमपि सम्भवं करोति ।[2] सैव वषट्कारस्वरूपमाधाय हिंस्रेभ्यः हिंसृभिः घातिभिश्च लोकान् रक्षति । सैव "स-रे-ग-म-प-ध-नि-स" इति सप्तस्वरान् महामंगलार्थं लोकानु रंजनार्थं च तद्रूपं भवति । अक्षरस्वरूपमाश्रित्य आश्रितास्मान् जरा-मृत्यु-भय रहिताद् न सम्पादयति ।[3] नानाविधरक्षास्वरूपमाश्रित्यास्मान् रक्षति ।[4] सैव काले मोहकलितं लोकं स्वमहिम्ना मोहमुक्तं विधाय स्वप्रकाशं प्रयच्छति । तस्या एव कृपया मोहमुक्तो नरः "नष्टो मोहः स्मृतिर्लब्धा त्वत् प्रसादान्मयाच्युत" इति गीतोक्तभावमनुभवति। अस्य समग्रस्य शाक्तदर्शनसम्बलित क्रमदर्शनसिद्धान्तसमूहस्य तत्त्व-प्रकाशनं मार्कण्डेयपुराणं दुर्गासप्तशत्या प्रथमचरितं च सम्पादयति। एतेन मार्कण्डेयमुनेः क्रमदर्शनपारगत्वं शैवदर्शनसाक्षात्कारं कर्तृत्वञ्च

---

1. विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ ।
स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः ।। [मा0पु078/

2. ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ।। [मा0पु078/55-

3. त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ।।
[मा0पु078/73]

4. प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ।।
[मा0पु0 81/25]

45

सुतरां प्रतिष्ठितो भवति ।

(ख)-मार्कण्डेयपुराणे महालक्ष्म्याः स्वरूपम्

मार्कण्डेयपुराणं शाक्तदर्शनस्य महत्त्वानुरूपमेव समुल्लसति। अत्र दर्शने महालक्ष्म्याः स्वरूपं कर्तुमकर्तुमन्यथा कर्तृत्वेन चिन्तितम् । लक्षयति, लक्षति, लक्ष्यते वा इति लक्ष्मीः इति व्युत्पत्त्या लक्ष्यस्य परमतत्त्वप्राप्तिरूपस्य कामनायाः परिपूर्तिरेव लक्ष्मीः। किन्तु यया अलक्ष्यमज्ञातमपि तत्त्वं ज्ञातं भवति । सैव लक्ष्मीः लक्षदर्शने इति धातोः औणादिके ई प्रत्यये तस्य मुट् प्रत्यये च कृते लक्ष्मीशब्द-सिद्धिः । मेदिनीकोषे च सम्पत्ति- शोभा-छवि-औषधि-पद्मा-वृद्ध्यादि शब्देषु लक्ष्मीः शब्दस्य प्रयोगो दृश्यते ।[1]

अन्यपौराणिकाख्यानानुसारं लक्ष्मीः धनरूपा श्रीविष्णोः पत्नी समुद्रमन्थने सागरात् समुद्भूता समुद्रतनयारूपेण चित्रिता . यस्योपरि महालक्ष्म्याः कृपाभावः, स कथमपि प्रतिष्ठां लब्धुं नार्हति। सा च चञ्चला लोकाननुकम्पयन्ति । पूर्वं कृपापात्रं जनं परित्यज्य नवनवान् जनाननुकम्पयन्ति । किन्तु ये खलु जनाः दानशीलाः सन्तः अर्थिभ्यो धनं प्रयच्छन्ति, ते सदा लक्ष्मीपात्राणि जायन्ते । देवानां प्रार्थनया महिषासुरवधार्थं सर्वदेवानां शक्तिः स्व-स्व गुणान्वित आयुधैः सम्भूष्य[2] एकीभूय च तेजोरूपेण नीचयो भूत्वा नारीरूपमादधात्[3]

---

1. लक्ष्मीः सम्पत्तिः शोभयोः ।
ऋद्ध्योषधौ च पद्मायां वृद्धिनाम्यौषधे पि च ।
(मे0को0 110/28)

2. अतुलं तत्र तत्तेजः सर्वदेवशरीरजम् ।
एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा ॥
(मा0पु0 79/13)

सा हि नारी समस्तशक्ति नीचयं सती दुर्गास्वरूपादधानानि:सीम शक्तिका देवानामिष्टसिद्ध्यर्थं लोकोत्सादकं महिषासुरं जघान् ।[1] महामायावी लौकिकशक्तेः पुञ्जभूतः तमोगुणस्य महान् प्रतीको महिषासुरः। तस्य नाशार्थं यः खलु सत्त्वगुणातिशयः स एव सिंहः, स च धर्मरूपः, यस्याः धर्मरूपायाः देव्याः वाहनभूतः सन् महिषासुरस्यो पीनःपुन्येन स्वतीक्ष्ण नखैः महिषासुरं छिनत्ति ।[2] सिंहेन आहतो महिषासुरः सद्य एव देव्या असिप्रहारेण दिवंगतः। अथेदं महिषासुर देव्याश्च युद्धवर्णनं सत्त्वासत्त्वयोःपरस्परं द्वन्द्वात्मकमेव । एवमेव सत्त्वात्मिका परमेश्वरी भगवती लक्ष्मीःदिनानुदिनं नानारूपमाधाय देवान् सत्त्वप्रधानान् जीवान् परिरक्षति । अयमेव भावःमहालक्ष्म्याः स्वरूपेण मार्कण्डेयपुराणे दुर्गासप्तशत्यान्च निरूपितः।

तुष्टाःपुष्टाः पूर्णमनोरथाश्च देवाःनिरन्तरं देवीं महिषासुरमर्दिनीं स्तुवन्ति । सा च नितान्तमर्थसाधनाय निरन्तरं देवान् अनुकम्पयन्ति ।सा शिव विष्णुःब्रह्मादिभिःअपि स्तूयमानाः दरीदृश्यते ।[3] किन्च सकलमनोरथसिद्धिदात्री सा देवत्वस्थापनाय

---

४. यस्य देवस्य यद्रूपं यथाभूषणवाहनम् ।
तद्देव हि तच्छक्तिरसुरान् योद्धुमाययौ ।। [मा0पु0 8४/14]

1. त्रिनेत्रा च त्रिशूलेन जघान् परमेश्वरी ।। [मा0पु0 80/19]

2. यस्याः प्रभावमतुलं भगवाननन्तो
ब्रह्मा हरश्च न हि वक्तुमलं बलं च ।
सा चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ।। [मा0पु0 81/4
दु0स0 4/4]

3. अर्धनिष्क्रान्त एवासौ युध्यमानो महासुरः ।
तया महासिना देव्या शिरश्छित्त्वा निपातितः ।।
[मा0पु0 80/42]

47

दिव्यत्वं स्थापनाय असुरत्वं महिषासुरस्वरूपं सदा नाशयति इत्यतो मार्कण्डेयमुने:शिवशक्तितत्त्वज्ञानप्रतिपादनक्षमतेति शम् ।

[ग] मार्कण्डेयमहापुराणे सरस्वतीतत्त्वविमर्श:

स्व स्पंदनेन अन्धतमसि निमज्जतां जनानां या खलु प्रकाशरूपं मार्गं निदिशति ,असत:सद्गमयति, तमस: ज्योतिर्गमयति, सा खलु वर्तते दुर्गासप्तशत्या: सिद्धिबुद्धे अधिष्ठात्री देवी सरस्वती नाम्ना ।

क्लींमिति कामनाबीज परिमण्डिता सा अनुदिनं समग्रमिदं चराचरात्मकं,जगत् स्व महिम्ना परिदीपयति । गुरुरूपेण, ज्ञानरूपेण, चित्तरूपेण सा अन्तर्निगोढ़ा सति स्त्रीणां शक्तिनां ज्ञानशक्तित्वमधिगच्छति । शिवदूतीति[1] भूत्वा सा दानवान् वाग्बलेन सभाय आवदयति, शुम्भनिशुम्भरक्षितं दानवजालं देवानामभयाय निकृन्तति सा ।[2] सा हि जगज्जननी प्राकृतव्यवस्थायां बलात्मान् लोके स्थितान् तद्व्यवस्थां खण्डनाय यौ हि चण्डमुण्डौ प्रवृत्तौ ,तयो: हुंकारेणैव नाशं नीत्वा शिवत्वं जीवनव्यवस्थां च सम्पादयति ।[3] मुण्डं निहत्य

---

1. शिवदूतीति लोके स्मिंस्तत:सा ख्यातिमागता ।। [मा०पु०8
2. खण्डं-खण्डं च चक्रेण वैष्णव्या दानवा:कृता:।
   वज्रेण चैन्द्रीहस्ताग्रविमुक्तेन तथापरे ।। [मा०पु०86/40]
3. चामुण्डेति ततो लोके ख्याता देवि भविष्यसि ।
   [मा० पु०84/27]

48

मुण्डमालाधारिणी भगवती कालिका चण्डमुण्डादपि चाण्डत्व-मात्मानं सम्पादयति । समस्त चराचरात्मकसृष्टिवैभवं स्वकण्ठे धारयति । किञ्च मुण्डमाला वर्णमालेति कृत्वा मुण्डरूपेण समग्र-ज्ञानराशिं वर्णसमाम्नायं देवी सरस्वती कालीरूपं विधाय धारयति। यथा मुण्डस्याभिप्रायः मस्तिष्क इति पदेनाधुनिकाः वक्ष्यन्ते । तथैव भारतीयदृष्ट्या मस्तिष्कस्यार्थः ज्ञानमिति जायते । ज्ञानस्य प्रकाशकाः शब्दाः। शब्दस्य प्रकाशकाः वर्णा इति । कल्यते विस्तार्यते जगद् अनेनेति व्युत्पत्त्या वर्णमालैव मुण्डमालेति, सैव शक्तागमसिद्धान्त तात्पर्यं मुण्डमालातन्त्रे निगदितम् । वर्णाः ज्ञानमयाः प्रकाशकाः।[1] प्रकाशविमर्शरूपाश्च तत्र-तत्र श्रुतौ[2] मार्कण्डेयपुराणे च निगदिताः।[3]

---

1. क. ज्योतिर्वद् ज्ञानानि भवन्ति । [स्पृ०वा०]

   ख. अ इ उ ण् इत्यादि चतुर्दशसूत्रोपदेशेन इमामेव वर्णमालां-सृष्ट्यारम्भे ताण्डवनृत्यप्रसङ्गे शिवः स्व डमरुनिनादेन प्रस्थापयति । तदुक्तम्-

   नृत्तावसाने नटराजराजो ननाद ढक्कां नवपंचवारम् ।
   उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शः शिवसूत्रजालम् ॥
   [नन्दि०कारि०]

2. इदमक्षरशःछन्दश्च समुपक्रान्तःन भुक्त्वा न बलं पवृयसब्रगुणराशि
   [प०ग०ब्रा०]

3. शब्दात्मिका सुविमलर्ग्यजुषां निधान-
   मुद्गीथरम्यपदपाठवतां च साम्नाम् ॥ [मा०पु०४।/१०]

अक्षरराशिरित्यस्य वर्णराशिरित्यर्थः । गीतायां च अयमेव भावः विराट्रूपदर्शनप्रसंगे भगवता श्रीकृष्णेन प्रतिपादितम् ।[1] किन्च श्रुतावप्युक्तम्- "अ"इति ब्रह्मेति । भगवता पाणिनिना स्वसमाधावनुभूतं माहेश्वरपरम्पराप्राप्तं अ इ उ ण् इत्यतः अकारमारभ्य अक्षानकस्य "हलीति" सूत्रस्य हकारपर्यन्तम् "अहमिति"पदं प्रयुज्यते। अकारःशिवःहकारश्च शक्तिःइति शिवशक्तिमयं जगत्, तच्च वर्णमयं सत् मुण्डमयमित्यप्याख्यायते । इदमेव तत्त्वं महामुनिमार्कण्डेय स्वसमाधावनुभवति तस्मादुच्यते मुण्डासुरवधस्याख्यानम् इति ।[2] इदन्च तत्त्वं अन्यपुराणेषु शैवशाक्तदर्शने च तथा नाथसिद्धयोगी सम्प्रदायेषु च इदन्ता अहंतेति तत्त्वेन विशदं निरूपितम् । सा भगवती मुण्डमालिनी सति लोकविरुद्धं शिवतत्त्वं लोककारकं रक्तबीजं आकृष्य स्वकरे धृतखर्परे तद्रक्तं संकलय्य पिबति मुण्डमालां च समरूपेण स्वगले विधापयति । येन शिवतत्त्वनाशको रक्तबीजः आकृष्य स्वकरे धृतखर्परे तद्रक्तं संकलय्य पिबति मुण्डमालां च समरूपेण स्वगले विधापयति । येन शिवतत्त्वविनाशको रक्तबीजःनिःशेषतां याति समस्तं जगत् सुखमनुभवति ।[3] एवमतिगभीरं देवीतत्त्वरहस्यं

---

1. अक्षराणामकारोऽस्मि । [गीता0 10/33]
2. यो मां जयति संग्रामे यो मे दर्पं व्यपोहति ।
   यो मे प्रतिबलो लोके स मे भर्ता भविष्यति ।। [मा0पु082/120]
3. यावन्तः पतितास्तस्य शरीराद्रक्तबिन्दवः ।
   तावन्तः पुरुषा जातास्तद्वीर्यबलविक्रमाः ।। [मा0पु085/44]

लोकमंगलकारकं तन्मुखेन शिवतत्त्वं च मार्कण्डेयपुराणे सरस्वत्याः महिमाप्रसंगे विभिन्नदृष्टान्ताख्यानकरूपेण सूपपन्नम् । वं दृष्ट्वा एतत्तत्त्व जिज्ञासु जनः नितान्तं मोदमनुभवति ।

देवानां पुरतःसिद्धिबुद्धेरधिष्ठात्री भगवती सरस्वती सिद्धान्तरूपेण समुपस्थापयति । यत् भो देवा ? एवं रूपेण भवत्सु यदा-यदा बाधासु समुपस्थापयिष्यति, तदा-तदा अहमवतीर्य भवतां बाधां विनाशयिष्यामि, इति प्रतिज्ञावचनं ददाति ।[1]

एवं सप्तशती एतस्मिन् प्रसंगे मार्कण्डेयपुराणे अनन्तकोटि-ब्रह्माण्डजनन्याः राजराजेश्वर्याःपराम्बायाः भगवत्याःदुर्गायाः निःसीममहिमा तद्द्वारा शिवतत्त्वप्रकाशकाःप्राबल्येन निरूपिताः। मया च शोधप्रबन्धे एतत् तत्त्वस्य प्रदर्शनं दिङ्मात्रेण निरूपितम्। अधिकेन एतत्तत्त्व वेत्तारः सुधय एव प्रमाणमिति दिक् ।

---

1. इत्थं यदा-यदा बाधा दानवोत्था भविष्यति ।
   तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ।।
   [मा०पु० 88/54-55]

-----

## मार्कण्डेयपुराणे सांख्ययोगतत्त्वपरिचय:

भारतीयजीवने सांख्यदर्शनस्यात्युन्नतं स्थानमासीत् । अतोदात्त विचारवन्तो ये खलु तत्त्वचिन्तका:आसन्, ते सांख्य-दर्शनसरणी माश्रुत्य तत्त्वविषये, रहस्यविषये, जीवजगत्विषये च विचारयन्ति स्म, स्वानुभवं प्रकाशयन्ति स्म च । किन्च भगवता वेदव्यासेन महाभारते शान्तिपर्वणि कथितं यत् अस्मिन् लोके यद् किन्चिदमपि ज्ञानमस्माकं समुल्लसति, तन्निखिलं शान्तियोगसंबद्धमेव। वस्तुतस्तु महाभारते आख्यानकल्पेण तत्त्वचिंतनप्रसंगेषु यन्निगदितं तत् मूलस्थानीकं महाभारते सर्वत्रैव दृश्यते । किमधिकं गीताया: यदि प्रभाववैशिष्ट्यं ज्ञानगत गौरवन्च तत् सांख्ययोगदर्शनमाश्रुत्यैव सुपन्नमिति प्रेक्षावद्भि:न तिरोहितम् ।

वेदेषु प्राकृतविलासस्य इन्द्र-पूषा-अर्यमापृथिव्या-द्यौ: अग्ने:वरुणस्य च यदि प्राकृतं वैभवं विश्वतो यज्ञव्यवस्थायां वर्णितं तन्मूलभादायैव सांख्यदर्शनं प्राकृतिकं जागतिकन्च वैभवं तदेव प्रकृति पुरुष-बुद्ध्यहंकार एकादशेन्द्रिय-पन्चतन्मात्रा-पंचभूतानि माध्यमेन ज्ञनक्ति । अत:वेदसामान्यविषयमादाय तत्र सूक्ष्मेक्षितया तत्त्वनि-ष्पादनद्वारा दार्शनिकविचारप्रकर्षं सांख्यदर्शनं प्रस्तौति । एतेनेतिहास पुराणाभ्यां वेदं समुपबृंहयेत् इति सिद्धान्तो स्वकीय सांख्यदर्शनस्य पुष्कल:स्वाभाविकश्च प्रभावो मार्कण्डेयपुराणे पि निपतित:। अत: शोधकार्यारम्भादादावेवा हं एतत् तत्त्वं स्वशोधप्रबंधनिरूपणाय

---

1• ज्ञानं च लोके यदिहास्ति किन्चित् ।
सांख्यागतं तच्च महामहात्मन् ॥
[महा०शा०प० 12/301/119]

संकल्पितवान् ।

वस्तुतस्तु अयमपि प्रकरणं मार्कण्डेयपुराणस्य यथानुभूतं यद् यत् कुत्रापि पुराणस्याध्ययने प्रवृत्तिर्जायते, तत्र तत्रैव सांख्य-दर्शनस्य प्रभावोपलक्ष्यते । अन्यथा अस्य प्रकरणस्य पूर्वे प्रकरणे प्रतिपादिता देवीतत्त्वमीमांसा संगतं कथं स्यात्, तत्रापि शिवशक्त्योः वैभवविलासवर्णनेन प्रायःसांख्यतत्त्वस्य ज्ञानमेवोज्जृम्भते । किन्च स्पष्टत एव ये खलु विषयाः मार्कण्डेयपुराणे प्रतिपादिताः प्रकरणरूपेण तेषु योगाध्यायवर्णनं, मुक्तिलक्षणम्, प्राणायामादिविमर्शः योगविघ्न-वर्णनं, योगसिद्धीनां च वर्णनम्, यमनियमासनप्राणायामादि वर्णनम् योगिनामाहारादि चर्चा, प्रणवादि माहात्म्यवर्णनं तत्र-तत्र प्रकरणेषु निगूढो विद्यते । एवमेव सांख्यतत्त्वानामपि विवेचनं क्वचिद् सांख्य-तत्त्वानुरोधेन, क्वचिद् स्पष्टवचनेन, क्वचिद् च फलितार्थकथनेन मार्कण्डेय-पुराणे निगदितमस्ति । प्रसंगतःअस्मिन विषये मार्कण्डेयपुराणमाश्रित्य सिंहावलोकनं न्यायेन किञ्चिद् विवेचयामि ।

मार्कण्डेयपुराणस्य सांख्ययोगदृष्ट्या पुरुषस्य विवेचनं पुष्करपलाशवन्निर्लेपमिति[1] कृत्वा विवेचितम् । तत्रैव प्रकृतेःविकृतीनां सुखदुःखत्वसाधनमुक्तम् ।

---

1. सोहं न दुःखी न सुखी यतो हं प्रकृतेःपरः।
यो भूताभिभवो भूतैः सुखदुःखात्मको हि सः।।
[मा०पु०35/5]
भूतेन्द्रियमयं स्थूलं न त्वं राजन्न चाप्यहम् ।
न तन्मात्रं मया वाच्यं नैवान्तःकरणात्मकौ ।।
[तत्रैव 35/14]

53

भगवान् मार्कण्डेयः सांख्यदर्शनदृष्ट्या प्रकृतिं बन्धनकारिणीं स्वीकरोति । विषयाक्रान्तो जनः चेतसिस्थैर्यत्वं नानुभवति ।[1] अतःप्रकृतिं बन्धनकारिणीं मत्वा तस्यापनोदः कर्तव्य इति पुराणमादिशति । मार्कण्डेयपुराणस्य षट्त्रिंशाध्याये योगस्य महिमा वर्णिता स्ति ।[2] किन्तु अष्टांगयोगविधिनैव योगसिद्धिरिति कृत्वा प्राणायामादीनामत्र पुराणे चर्चा समजनि।[3]

---

1. किन्त्वत्र विषयाक्रान्ते स्थैर्यर्यस्त्वं न चेतसि ।
न चापि वेद्मि मुच्येयं कथं प्रकृतिबन्धनात् ॥
[मा०पु०35/18]

2. योगे च शक्तिर्विदुषां येन श्रेयः परं भवेत् ।
मुक्तियोगात् तथा योगःसम्यग्ज्ञानान्महीपते ॥
संगदोषोद्भवं दुःखं ममत्वासक्तचेतसाम् ।
[तत्रैव 36/2]

कर्मणा मोक्षमाप्नोति वैपरीत्येन तस्य तु ।
एतत्ते कथितं ज्ञानं योगं चेमं निबोध मे ॥
यं प्राप्य ब्रह्मणो योगी शाश्वतान्नान्यतां व्रजेत् ॥
[तत्रैव 36/8]

3. प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण विषयान् ध्यानेनानीश्वरान् गुणान् ॥
[मा०पु०36/10]

प्रथमं साधनं कुर्यात् प्राणायामस्य योगवित् ।
प्राणापाननिरोधस्तु प्राणायाम उदाहृतः ॥
[तत्रैव 36/12]

54

एवं धारणां प्राप्य समाधिश्च जायते । सिद्धयः धारणाप्राप्तेषु साधकेषु योगी कल्पभूतेषु स्वयमेवायान्ति,[1] स च योगी परमानन्द-वस्थां प्राप्य सर्वत्र अभिनन्दयो भवति । एवमेव अस्य पुराणस्य अष्टत्रिंशाऽध्याये योगीचर्या वर्णिता ।[2]

एवमेव 39-40 अध्यायेष्वपि योगिनां विलक्षणा चर्या पुराणे च संवृत्ता । तन्मात्राणां गुणानां प्रकृति-विकृतीनां च पुरुषेण प्रतिष्ठापनं दृश्यते । इति एतत्तत्त्वविदः सुगमतया जानन्त्येवेति शिवम् ।

---

1. परेण ब्रह्मणा तद्वत् प्राप्यैक्यं दग्धकिल्बिषः ।
   योगी याति पृथग्भावं न कदाचिन्महीपते ।।

   यथा जलं जलेनैक्यं निक्षिप्तमुपगच्छति ।
   तथात्मा साम्यमभ्येति योगिनः परमात्मनि ।।
   [मा०पु०37/41-42]

2. भगवन् योगिनश्चर्या श्रोतुमिच्छामि तत्त्वतः ।
   ब्रह्मवर्त्मन्यनुसरन् तथा योगी न सीदति ।।
   [तत्रैव 38/1]

---

## द्वितीयोऽध्यायः

## सांख्ययोगदर्शनाचार्याः

भारतीयदर्शनेषु सांख्यदर्शनस्य स्थानं अतीवादरास्पदमस्ति वैदिकविश्वदर्शनेऽपि सांख्यदर्शनं प्रमुखं प्रथमञ्च परिगण्यते । वस्तुतः सर्वदर्शनेषु सांख्यदर्शनप्राथम्ये कानिचित महत्त्वपूर्णानि कारणानि दृश्यन्ते । तत्र प्रथमन्तु इदं दर्शनं वेदेन साक्षाद् सम्बद्धं, वेदर्षि प्रणीतञ्च सम्भाव्यते । वैदिकग्रन्थेषु सांख्यदर्शनपरेतुःचर्चा भूयान् दृश्यते । उपनिषत्सु यत्र विश्वदर्शनतत्त्वान् विवेचनं प्राप्यते, तत्र सांख्यगत तत्त्वानां विश्लेषणं प्राधान्येन क्रियते । श्वेताश्वतरोपनिषदि सांख्यशास्त्रप्रवर्तकत्वेन महर्षिकपिलस्य नामोल्लेखःप्राप्यते ।[1]

पौराणिकवर्णनानुसारं प्राचीनभारते महर्षिकपिलप्रणीतस्य सांख्यदर्शनस्य दार्शनिकेषु समधिकमादरः आसीत् । सांख्ययोगाचार्याणां नियतक्रमेण काचित् सूची यद्यपि अद्यापि नोपलभ्यते । तथापि सांख्यदर्शनस्य भारतीयदर्शनान्यतमत्वं प्रायःसुप्रसिद्धमासीत्। सांख्याचार्यत्वेन यद्यपि अनेकेषामाचार्याणां नामानि स्मर्यन्ते । तथापि सांख्यदर्शनप्रणीतत्वेन महर्षिकपिलस्य नाम सादरं गृह्यते। अत्र कपिलादिनैकेसांख्याचार्याःसैतिह्यं विविच्यन्ते ।

### महर्षिकपिलः-

संस्कृतसाहित्ये कपिलनाम्ना अनेके आचार्याःप्राप्यन्ते। कस्य कपिलाचार्यस्य सांख्यदर्शनेन सह सम्बन्धःअस्तीति नितरां

---

1. ऋषिं प्रसूतं कपिलं यस्तमग्रेज्ञानैर्बिभर्ति जायमानं चपश्येत्।
[श्वेत05/2]

विचारणीय:। श्वेताश्वतरोपनिषदि सांख्यशास्त्रप्रवर्तकं कपिलमधिगता केचन आचार्या: तमेव वस्तुत: सांख्यदर्शनप्रणेतारं मन्यन्ते परन्तु केचन पूर्वास्त्या:पाश्चात्याश्च विद्वांस: कपिलस्य पूर्वोक्तीय सम्बन्धे सन्दिहन्ते । तत्र मैक्समूलर-पोलक्रुकप्रभृतय: पाश्चात्या:विचारका: पुराणेषु समुपलब्धं कपिलमेव सांख्यशास्त्रप्रणेतारं मन्यन्ते । बौद्धास्तु कपिलवस्तु नगरनिर्मातारमपि तमेव मन्यन्ते । पाश्चात्यो विद्वान् कीथ: कपिलशब्देन हिरण्यगर्भाक्षे विष्णुं शिवं वा मनुते । भागवत-महापुराणे पि कपिल:विष्णो:पन्चमावतारस्पेण वर्णित:।[1] कल्पभेदेन कपिल:क्वचित् अग्निरूपेण क्वचित् ब्रह्मपुत्ररूपेण च वर्णित:।[2] महाभारते वायुपुराणे[3] च कपिल: अग्निदेवावतार:अग्निनामाग्रज:आदित्यनाम्ना सम्वर्णित: ।

भागवतमहापुराणे कर्दमदेवहूतिभ्यामुत्पन्न:ऋषि:कपिल: सांख्यशास्त्रस्य प्रणेता अस्तीति निम्न:श्लोकै: विमृष्ट: "अयं सिद्ध गणाधीश: सांख्याचार्यै सुसम्मत:। लोके कपिल इत्याख्यां गन्तासे कीर्तिवर्धन ।" ब्रह्मपुराणे कथानकमेकं प्रसिद्धं यत् महाराज:सगरस्य षष्टिसहस्रपुत्रा:महर्षे:कपिलस्य क्रोधाग्निना भस्मीभूता:। वामनकूर्म-पुराणयो:ब्रह्मण:मन: प्रसूतेषु सप्तपुत्रेषु कपिलो अन्यतो:प्रजापतिस्य: परिगणित:। अयं कपिल: ऋग्वेदोक्त दशसंख्याकेषु प्रजापतिषु अन्यतम:

---

1. श्रीमद्भागवत (1/3/11)
2. अग्नि:स कपिलो नाम सांख्ययोगप्रवर्तक:।। (म0भा0 11-14)
3. आदित्यांश:कपिलस्त्वग्रजो ग्निरिति स्मृत:।

(वायुपुराण 3-43)

आम्नातः। तथा च मन्त्रवर्णः -"सप्त वीरासो अधरादुदायन्नष्टो-
त्तरात्तात्समजग्मिरन्ते । नव पश्चातात्स्थिविमन्त आयन्दशप्राक्
सानु वितिरन्त्यश्नः"।। दशानामेकं कपिलं समानं तं हिन्वन्ति क्रतवे
पार्याय । गर्भं माता सुधितं वक्षणा स्ववेनन्तं तुषयन्ती बिभर्ति"।
[ऋ०वे० 10-27-15-6] बौद्धः अश्वघोषःस्वकीये बुद्धचरिते नामके
ग्रन्थे कपिलं प्रजापतिरूपं मन्वानः एवमुल्लिखति -

"स शिष्यःकपिलश्चेह प्रतिबुद्ध इति स्मृतः ।
स पुत्रः प्रतिबुद्धश्च प्रजापतिरिहोच्यते ।।"

श्वेताश्वतरोपनिषदःभाष्ये आचार्य्शंकराचार्येण सगरपुत्राणां भस्मकर्ता-
कपिलःकश्चिदन्यःप्रतिपादितः। तथा सांख्यप्रणेता कपिलःकश्चिदन्यः
इत्युक्तः ।

एवं रीत्या पुराणेषु कथितानां कपिलानां चतुर्धा समुल्लेखः
कर्तुं शक्यते । तत्रैको यत् बौद्धाःगौतम मुनिवंशजं मन्यते यस्य च
नाम्ना कपिलवस्तुनगरस्य निर्माणं जातमपि । द्वितीयो ब्रह्मणःमनः
प्रसूतो मूलतत्त्वज्ञानी कपिलः। तृतीयःअग्न्यावतारविशिष्टःतपस्वी
कपिलः येन स्वक्रोधाग्निना सगरपुत्राः भस्मीकृता । चतुर्थो कर्दमदेव-
हूतिभ्यां समुद्भूतःविष्णववतारभूतः सांख्यतत्त्वोपदेष्टा कपिलः।

एतेषु चतुर्षु कपिलेषु कःकपिलःसांख्यशास्त्रस्य प्रणेता
भवितुमर्हति इति नितरां विचारणीयो विषयः। तत्र सांख्यबौद्ध-
साहित्ययोरनुशीलनेन इदं ज्ञायते यत् सांख्यदर्शनं बौद्धदर्शनतो प्राचीनतर-
मस्ति । अतःकपिलवस्तुनगरस्य निर्माता गौतममुनिवंशजःकपिलः

सांख्यशास्त्रस्य प्रणेता इति बौद्धानां कथनं सर्वथा असंगतं प्रतिभाति। एवमेव विष्ण्ववतारस्वरूपेण वर्णित:कपिल: वेदान्तानुपदेशकत्वेन अभिमतत्वाद् न सांख्यशास्त्रप्रवर्त्तको भवितुमर्हति । अवशिष्टौ द्वौ कपिलौ प्रथम: ब्रह्मणो मानसपुत्र:द्वितीयो अग्न्यावतारश्च सांख्यशास्त्रस्य प्रणेतारौ सम्भवत:। तत्र सांख्यशास्त्रीयवाङ्मयानुशीलनेन इदमवगम्यते यद् ब्रह्मसुत: कपिल: तत्त्वसमासस्य रचयिता स्ति । तथा अग्न्यावतारभूत: कपिल:सांख्यसूत्रस्य प्रणेता मन्यते ।[1] एतस्याभि: मतस्य उपोद्वलकं प्रमाणं महाभारतादि ग्रन्थेषु द्रष्टुं शक्यते ।[2] वायुपुराणे मोक्षज्ञानं जिज्ञासूनां मुनीनां एका सूची प्राप्यते । तत्र आसुरिकपिल: प्रभृति ऋषीणां ब्रह्मणो मानसपुत्ररूपेण उल्लेख:प्राप्यते । सांख्यकारिकाभाष्यकर्त्ता गौडपादाचार्योऽपि सनकादिसप्तर्षिषु कपिलं ब्रह्मसुतं ख्यापयति ।[3]

---

1. सांख्यशास्त्र के कर्ता- "श्रीकृष्णशास्त्रितैलङ्ग कृत लेख ।

2. सन:सनत्सुजातश्च सनक:ससनन्दन: ।
   सनत्कुमार:कपिल:सप्तमश्च सनातन:।।
   सप्तैते मानसा:प्रोक्ता ऋषयो ब्रह्मण:सुता:।
   स्वभावगतविज्ञाना निवृत्तिधर्ममाश्रिता: ।।
   एते योगविदो मुख्या:सांख्यज्ञानविशारदा:।
   आचार्या धर्मशास्त्रेषु मोक्षधर्मप्रवर्तका: ।।

3. सनकश्च सनन्दश्च तृतीयश्च सनातन: ।
   आसुरि:कपिलश्चैव वोढु: पञ्चशिखस्तथा ।।
   इत्येते ब्रह्मण: पुत्रा:सप्त प्रोक्ता महर्षय:।।
   (वायुपुराणे)

केचन सांख्यशास्त्रविचारकाः विद्वांसः विष्ण्ववतार कपिल अथ च अग्न्यावतारकपिलः इत्यनयोः एक एव मन्यन्ते ।त एवमभिधीयते यत् विष्णुवतारकपिलः एव दाहकत्वादिगुणयुक्तः अग्निसमो भूत्वा स्वक्रोधाग्निना षष्टिसहस्राणि सगरपुत्रान् भस्मीकृतवान् । पुराणेषु श्रूयते यत् अस्य जन्मसमये ब्रह्मा स्वयमेव एतमुपस्थाय सांख्यादि दर्शनानां तत्त्वानि समुपदिदेश । अतः स्वतःसिद्धज्ञानत्वात् ब्रह्मणःसमेव अपूर्वविदुष्यश्च अयमेव ब्रह्मसुतः कपिलः सांख्यादि शास्त्रकर्त्ता प्रोक्तः । श्रीमद्भागवतपुराणे कपिलद्वारा स्वमातरं प्रति सांख्यतत्त्वज्ञानोपदेशस्य वर्णनं प्राप्यते । अस्मिन् वर्णने प्रकृति-पुरुषयोः यथोल्लेखः प्राप्यते तेनेदं मन्यीयते यत् इदमेव वस्तुतः सांख्यशास्त्रं लोके प्रसिद्धि मगात् । अपि भागवतीयवर्णनानुसारं विष्ण्ववतार-रूपस्य कपिलस्यास्य सम्बन्धः सांख्यदर्शनेन सह संजात इति । यद्यपि सांख्यदर्शनतत्त्वानां इतः प्रागपि अवस्थानं अविच्छिन्नपरम्परा प्राप्तमासीत् परन्तु स्वमातरं देवाहूतिमुद्दिश्य कपिलेन सर्वतः प्रथमं प्रकृति पुरुषादि जागतिकतत्त्वानामुपदेशः कृतः । एतस्मात् कारणात् सांख्यशास्त्रप्रणेता उपदेष्टा च अयमेव अग्निसमो विष्ण्ववतारभूतः कपिलः मन्यते ।

6।

सांख्यशास्त्रप्रणेतुः कपिलस्य सम्बन्धे पौराणिकमितिवृत्तम्-

श्रीमद्भागवतस्य तृतीयस्कन्धे महर्षेः कपिलस्य प्राकट्य-विषयकं विस्तृतविवरणं प्राप्यते । संक्षेपेण इदमुच्यते यत् अखिल-ब्रह्माण्डनायको भगवान् विष्णुःमहर्षेः कर्दमस्य तपसा सन्तुष्टः तत् जायायां मनोदुहितरि देवहूत्यां कपिलात्मना स्वात्मानं प्राकटयत् ।[1] अनेन प्रकारेण स्वयमेव भगवान् विष्णुः आत्म मायया सांख्यप्रणेता तत्त्वविवेकः कपिलो भूत्वा आत्मतत्त्वज्ञानेन लोकान् बोधयामास।[2]

श्रीमद्भागवतस्य प्रथमस्कन्धे एव विष्णोरवताराणां चर्चा कृता स्ति । तत्र सिद्धेशो महामुनिःकपिलःविष्णोःपञ्चमावताररूपेण सम्वर्णितःतथा च स्वयमेव कपिलः सांख्यशास्त्रं प्रवर्तयामास इत्यप्युप-वर्णितः । तत्रत्याख्यानेन इदमवगम्यते यत् कपिलात् पूर्वमपि विप्रकीर्ण-रूपेण सांख्यशास्त्रीयतत्त्वानां विवरणमासीत् परन्तु कालवशात् विलुप्त-मिव सञ्जातमासीत् । महामुनिना कपिलेन स्वशिष्याय आसुरेय

---

1. सहाहं स्वांशकलया त्वद्वीर्येण महामुने ।
तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ।।
[श्रीमद्भागवते 3/21/32]

2. कपिलस्तत्त्वसंख्याता भगवानात्ममायया ।
जातः स्वयमजःसाक्षादात्मप्रज्ञप्तये नृणाम् ।।
[श्रीमद्भागवते 3/25/1]

सांख्यशास्त्रस्योपदेशं कृत्वा पुनः अस्य शास्त्रस्योद्धारः कृतः। सांख्यशास्त्रीयतत्त्वानामुपदेशप्रवचनकृतादिनिर्माणद्वारा सर्वतःप्रथमं कपिलेनैव सांख्यशास्त्रस्योद्धारो विहितः। अत एव यं सांख्यशास्त्रप्रणेतृत्वेन प्रवर्त्तकत्वेन च जगति प्रसिद्धिमगात्। देवीभागवतपुराणे मनागन्तरेण तदेवाख्यानकमाम्रेणितमस्ति। तत्र कर्दमादेवहूत्यामवतीर्णो महायोगी कपिलः स्वमातरं देवहूतिम् आत्मतत्त्वविनाशायकं सांख्यशास्त्रमुपदिदेश इत्युपवर्णितम्।[1]

विष्णुपुराणे महर्षिकपिलः अगन्धोर्हनिरासाय विष्णवंश प्रोक्तः।[2] मत्स्यपुराणे पि -

सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते।[3]

कूर्मपुराणे कथितम् यत् महामुनिना कपिलेन पञ्चशिखजैगीषव्याभ्यां सर्वविधानाभविधानां निवृत्तये परं तत्त्वज्ञानं प्रदत्तम्।[4]

---

1. एवैःप्रयमे भगवान् यश्चो नानादिपूरुषः।
   आकूत्यां देवहूत्यां च कपिलो सौ च कर्दमात् ॥
   सांख्याचार्यो सर्वलोके विख्यातःकपिलो विभुः॥
   [देवीभागवते 8/3/13-14]
   कपिलो पि महायोगी भगवान् स्वाश्रमे स्थितः।
   देवहूत्यै परं ज्ञानं सर्वाविद्यानिवर्तकम् ॥
   सविशेषं ध्यानयोगमध्यात्मज्ञाननिश्चयम्।
   कापिलं शास्त्रमाख्यातं सर्वाज्ञानविनाशनम् ॥
   [देवीभागवते 8/3/17-18]
2. मत्स्यपुराणे 3-27
3. जैगीषव्याय कपिलस्तथा पञ्चशिखाय च।
   दत्तवानैश्वरं ज्ञानं सर्वाविद्यानिवृत्तये ॥.

नारदीयपुराणे सगरस्य प्रसङ्गे कपिलःदेवो देवेशो योगी सांख्ययोगरतो विष्णुर्जिष्णुमहात्मा कोटिसूर्यसमप्रभो ध्याननिरतो मुनीश्वरःसमस्तेन्द्रियसन्दोहनियन्ता सागरसन्ततिभस्मकर्त्ता आदिः तेजोराशिश्चोक्तः।[1] पद्मपुराणे सृष्टिखण्डे कपिलः साक्षाद् विष्णुरूपो निर्दिष्टः।[2] स्कन्दपुराणे रेवाखण्डे कपिलःसाक्षाद्विष्णुःप्रोक्तः।[3]

बौधायनधर्मसूत्रे [2/6/30] प्रह्लादपुत्रस्यासुरस्य कपिलस्योल्लेखो ऽस्ति ।कपिलस्मृतिनामकधर्मग्रन्थस्य रचयिता ह्येकःकपिलोऽभवत् । शैवसम्प्रदायस्य सूतसंहितायामुपपुराणकर्तॄणां प्रसङ्गे एकस्योपपुराणकर्तुः कपिलस्योल्लेखो विद्यते । सताष्टादशपुराणानां नामान्युल्लिख्योपपुराणगणनायां सप्तमस्य कपिलोपपुराणस्योल्लेखो ऽस्ति।[4]

महाभारतस्यानुशासनपर्वणि विश्वामित्रपुत्रस्य कपिलस्याप्युल्लेखो ऽस्ति ।[5] वायुपुराणे हिरण्यरोमा कपिल इत्येकस्य गन्धर्वस्य नामास्ति ।[6]

---

1. नारदीयपुराणे 8/8।
2. सनन्तःपृथिवी दग्धा विष्णुना ये श्वमार्गणे ।[पद्मपुराणे 8/148]
3. स्कन्दपुराणे ।75/2-7
4. कापिलं सप्तमं विदुः। [सूतसंहितायां 1/14]
5. महाभारते अनुशासनपर्वणि 7-56
6. वायुपुराणे - 3/59/25

महाभारते वनपर्वणि सगरस्याश्वमेधवर्णनपूर्वकं कपिलस्यो-ल्लेखोऽस्ति । राज्ञः सगरस्य षष्टिसहस्रपुत्राः कपिलस्य नेत्राग्निना ते तत्काल एव भस्मसाद्भूताः।[1] वाल्मीकिरामायणस्य बालकाण्डे कपिलसम्बन्धिन्या अस्या घटनाया वर्णनमस्ति ।[2]

पाञ्चरात्रसाम्प्रदायस्याहिर्बुध्न्यसंहितायामवताराणां वर्णनप्रसङ्गे एकस्य कपिलस्य उल्लेखोऽस्ति ।[3]

कियन्तः पाश्चात्त्या आधुनिकाः भारतीयाश्च विद्वांसः कपिलं काल्पनिकं मन्यन्ते, न तैतिहासिकं व्यक्तिं स्वीकुर्वन्ति। डा०लोकहुक:जैकोबी-मैक्समूलर प्रभृतयो विद्वांसः कपिलं काल्पनिकं कथयन्ति ।[4]

कीथादीनां स्वीकृतिरपि कपिलमत्यन्तं प्राचीनं प्रसिद्धञ्च साधयति । एतेनेदं सिद्ध्यति यत् कर्दमदेवहूतिपुत्रात् कपिलादतिरिक्तानां कपिलानां सांख्येन सह नास्ति कश्चित् सम्बन्धः। कृतत्रेतायुगयोः सन्धिकाले जन्म गृहीत्वा कपिलेन स्वमात्रे देवहूत्यै सांख्यतत्त्वप्रदेशो दत्तः । अस्य सांख्यसम्प्रदाये आसुरिः प्रथमः शिष्यः अभवत् ।

---

1. महाभारते -वनपर्वणि 107/1-4
2. वाल्मीकिरामायणे - 40/25-30
3. सिद्धिं ददाति यो दिव्यां प्रसंख्यानमयीं पराम् ।
   देवः सिद्धिः प्रदानेन कपिलः स निगद्यते ॥ [56/31]
4. सांख्य एण्ड योग- पृ० 2,3

2. आसुरिः-

अनेके ग्रन्थाःसांख्यप्रवर्त्तकं कपिलमाचार्यं मन्वते ते इदमपि प्रतिपादयन्ति यत् आसुरिं कपिलस्य प्रथमशिष्यं साधयन्ति । महाभारतग्रन्थोऽस्य अभिधानं सांख्याचार्याणां सूचौ ददाति तथा वायुपुराणं माहेश्वरयोगस्य योगिनां नामावली । पद्म-कूर्म-वामनपुराणानि इमं ब्रह्मणः मनःप्रसूतेषु पुत्रेषु गणयन्ति । तर्पणविधिःएतान् कपिलात् तृतीयेन स्थानेन योजयति । आसुरिं पन्चशिखाचार्यस्य गुरुःमन्यते । हरिभद्रसूरिमहोदयेन षड्दर्शनसमुच्चयटीकायां अस्य एकस्य श्लोकस्य उद्धरणं कृतम् [1] यस्य सम्बन्धःयोगशास्त्रेणास्ति । शतपथब्राह्मणेन बृहदारण्यकेन आसुरेःइतिहासं दद्भ्यां लिखितं यत् सः आसुरिनामक-स्थानस्य निवासी प्राश्नीपुत्रः आसुरायणस्य पुत्रःआसुरिनामकःपुत्र आसीत् । महाभारते शान्तिपर्वणि 326-328 { पर्यन्तं आसुरि-कपिलयोःसम्वादस्योल्लेखेन स्पष्टं प्रतीयते यत् कपिलेन आसुरये तत्त्वज्ञानस्योपदेशो दत्त आसीत् । एवं महाभारते प्रसंगवशाद् बहुषु स्थलेषु उल्लेखो ऽस्ति । {12/220/10-13} आसुरेःसांख्यविषयकस्य कस्यचिद् ग्रन्थस्योल्लेखो नास्ति ।

कीथ-मर्जे प्रभृतयः पाश्चात्या विद्वांसःआसुरिमैतिहासिकं पुरुषं नाङ्गीकुर्वन्ति । परमेषां कथनं निराधारं विद्यते ।संस्कृत साहित्ये तस्य बहुत्र नामोल्लेखात् स नूनमस्ति ऐतिहासिकपुरुषः।

---

1. विविक्त दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते ।
प्रतिबिम्बोदयःस्वच्छे यथा चन्द्रमसो ऽम्भसः।।
{स्याद्वादमञ्जर्यां 15 पृ0}

2• पञ्चशिखश्च-

सांख्येतिहासे पञ्चशिखस्य स्थानं महत्त्वपूर्णमस्ति । ईश्वरकृष्णेन विदितं यत् तेन सांख्यशास्त्रमुद्दिश्य एको विशाल: ग्रन्थो लिखित आसीत् य: षष्ठितन्त्रनाम्ना प्रसिद्ध आसीत् । एतेषां विषयाणां एकं सूचिपत्रं अहिर्बुध्न्यसंहितायां सुरक्षितं प्राप्यते । एते तत्त्वसमासमुद्दिश्यात् भाष्यं लिखितमासीत् ।

महाभारते पञ्चशिखस्य वंशस्य घटनायाश्च किमपि विवरणं प्राप्यते । एतस्य मातु:नाम कपिला इति आसीत्, यत: जनै:कापिलो यं इति उदीयते । कपिलस्य अनुगामित्वात् इदं उपनाम एतस्मै द्व्यर्थकं सार्थकं वा प्रतीयते । अयं वृद्धपराशरस्य गोत्रज: तथा[1] राजा जनकेन गुरु: इति तदाभिधाने स्वीयं गौरवं अनुभूयते । अयं भिक्षावृत्त्या स्वकीयं जीवनं यापयति स्म अत: कतिपयै:जनै:भिक्षु:इति शब्देनापि अभिधीयते स्म । एतस्य शिक्षा-दीक्षा पञ्चनददेशे अभूत । अयं पाञ्चरात्रसिद्धान्ते निष्णात:आसीत्। पञ्चविधानामयं प्रवीण: आसीत् । पञ्चप्रकारान् यज्ञान् विशेष-रूपेण जानाति स्म । तथा पञ्चभि:गुणै: युक्त:आसीत् इति पञ्चशिखनाम्ना प्रसिद्ध:आसीत् ।[2] वामनपुराणे अयं ब्रह्मण: अष्ट-मानसपुत्रेषु परिगण्यते तर्पण विधि: तर्पणीयदेवेषु पितृषु च ।कूर्म-पुराणे जैगीषव्यश्च गुरु:प्रतिपादित:वायुपुराणे माहेश्वरयोगस्य

---

1• पराशरस्य गोत्रस्य वृद्धस्य सुमहात्मन: ।
भिक्षो: पञ्चशिखस्याहं शिष्य:परम सम्मत: ।।
[महाभारते पृ0325-124]

2• पञ्चस्रोतसि निष्णात:पञ्चरात्रविशारद: ।
पञ्चज्ञ: पञ्चकृत् पञ्चगुण पञ्चशिख:स्मृत: ।।
[महाभारते 12-342-94]

ज्ञाता, येन अनेन मोक्ष:प्राप्त:इति कथितमभूत ।

महाभारतस्यानेकेषु स्थलेषु पन्चशिखस्योल्लेखो ऽस्ति । शान्तिपर्वण: 220 अध्याये आसुरे:शिष्यरूपेण पन्चशिखस्य उल्लेखो ऽस्ति। पन्चशिखस्य शिष्येषु मिथिलाधिपो धर्मध्वजो जनको ऽन्यतमो ऽभूत ।[1] महाभारते पन्चशिखजनकयो: संवादस्य वर्णनमस्ति । तत्र तेषां सिद्धान्तानामुल्लेखो ऽस्ति, ये व्यक्तं सांख्यसम्बन्धा:सन्ति, ते तथैव सांख्यसूत्रे तत्त्वसमासे च वर्णिता:सन्ति ।

वस्तुतो ऽस्मिन् संवादे दार्शनिकरूपेण तत्त्वानां विवेचनाय कश्चित् प्रसङ्गो नास्ति, किन्तु केवलं जनकस्योक्त्या प्रतीयते यत् स आत्मानं सांख्ययोगाचार्यं मन्यते स्म । सांख्यकारिका व्याख्याया युक्तिदीपिकाया आधारेण निश्चीयते यत् पन्चशिखाचार्यस्यानेके शिष्या:समभूवन् । तेषु जनकवसिष्ठावपि आस्ताम् महाज्ञानिनौ ।

३· वसिष्ठ:

श्रीमद्भागवतानुसारं वसिष्ठस्य परम्परा एवमुच्यते । ब्रह्मणो मानसपुत्रो वसिष्ठ:। तस्यात्मज: शक्ति:। तदात्मज: पराशर:। तदात्मजश्च व्यास:। एवं ब्रह्मण:चतुर्थ्यां परम्परायां व्यासस्यास्तित्वमुच्यते । व्यासो ऽत्मजो महात्मा शुकदेवमुनिस्तु प्रसिद्ध एवास्ति, यो राजानं परीक्षितं श्रीमद्भागवतं श्रावयामास ।

---

1· वैदेहो जनको राजा महर्षिं वेदवित्तमम् ।
पर्यपृच्छत् पन्चशिखं छिन्नधर्मार्थसंशयम् ।।
[12/319/4]

रामायणे त्रिशङ्कुकालिकस्य वसिष्ठस्य शतपुत्राणामुल्लेखोऽस्ति । विश्वामित्रद्वारा तेषां वधस्यापि तत्र चर्चाऽपि विद्यते ।

अयं पञ्चशिखाचार्यस्य शिष्येषु अन्यतम आसीत् । पञ्चशिखाचार्यश्चास्मै सांख्यज्ञानं प्रददौ[1] । महाभारतानुसारं अयं हिरण्यगर्भतो योगविद्यामधिगतवान् । अनुशासनपर्वणि महात्मयं शिवभक्तः प्रोक्तः । शान्तिपर्वणि सप्तसु अध्यायेषु वसिष्ठकरालजनकयोः संवादस्य विस्तृतं वर्णनं विद्यते[2] । वसिष्ठेन करालजनकाय सांख्ययोगतत्त्वानामुपदेशो दत्तः । प्राचीनसाहित्यस्यानुशीलनेन ज्ञायते यद् वशिष्ठनामानो नैके आचार्या अभूवन् । वाल्मीकिरामायणपर्यालोचनया वसिष्ठ इक्ष्वाकुकुलपुरोहितः प्रतीयते । अत्र वंशे बहुभिः राजभिःसह तस्य सम्पर्को बभूव । दशरथस्यानेकेषु यज्ञेषु स उपस्थित आसीत् । रामायणस्योत्तरकाण्डे 55-56 अध्याययो निमिवशिष्ठयोरुल्लेखो विद्यते । उभौ परस्परं शापतो मृत्युमुपगतौ । वशिष्ठो च ब्रह्मणो मानसपुत्रः प्रोक्तः । तत्र ब्रह्मण आशीर्वादेन मित्रावरुणयोः वीर्यतो वसिष्ठस्य पुनरुत्पत्तिस्तत्रवा कृता ऽस्ति । अतः स मैत्रावारुणिर्वशिष्ठः प्रसिद्धः । भगवतो रामस्य गुरुस्तु वशिष्ठः प्रसिद्ध एवास्ति । महाभारतयुगकाले ऽपि एकस्य वसिष्ठस्य उल्लेखोऽस्ति।

---

1· महाभारते -12/308/45

2· " 18/40-45

3· " 302/9, 229

परं वसिष्ठ करालजनकयो:संवादे प्रसङ्गवशात्सांख्यसिद्धान्तानां स्पष्टमुल्लेखो विद्यते नान्यत्र । महाभारते यथा प्रकृतिस्त्रिगुणात्मिका प्रोक्ता तथा सांख्यसूत्रे ऽपि ।[1]

जनक:

महाभारतस्य शान्तिपर्वणि 220-222 त्रयाणामध्यायानां वर्णनेन स्पष्टं प्रतीयते यत् जनक:पञ्चशिखस्य शिष्येषु अन्यतम आसीत्। मिथिलायां जनकनामानो नैके राजानो बभूवु:। तेषां जनकेतिनाम देशनाम्ना अजायत् । जनकस्य देशस्य राजत्वात्ते जनका:प्रोच्यन्ते परन्तु तेषां वैयक्तिकं नाम भिन्नं भिन्नमासीत् । पञ्चशिखशिष्यस्य व्यक्तिगतनाम धर्मध्वजोजनक इति आसीत् । विष्णुपुराणे धर्मध्वजस्य जनकस्योल्लेखो ऽस्ति । धर्मध्वजस्य पुत्रो अमितध्वज:।तस्यात्मजौ कृतध्वज: खाण्डिक्यजनकश्च । कृतध्वजस्यात्मज:केशिध्वज:खाण्डिक्य-जनकश्च । अमितध्वजस्यात्मज:केशिध्वज:।[2]

विष्णुपुराणस्यास्मिन् प्रसङ्गे केशिध्वजात्मविद्याविशारद: प्रोक्त:। तस्य पितृव्य:खाण्डिक्यजनक: कर्ममार्गी आसीत्। केशिध्वजेन खाण्डिक्यायात्मविद्याया उपदेशो दत्त:। केशिध्वजस्य प्रपितामहो खाण्डिक्यस्य च पितामह:धर्मध्वजजनक आसीत् ।सुलभया योगिन्या सहास्य संवाद: शान्तिपर्वणि 320 अध्याये विस्तरशो

---

1. महाभारते - 1/6।
2. सांख्यसूत्रे 126, 136
2. विष्णुपुराणे 12/325/4

70

वर्णितो ऽस्ति । प्रसङ्गे ऽस्मिन् जनक आत्मानं सांख्यज्ञाने राजनीतौ च निपुणं प्रोक्तवान् । यथा शान्तिपर्वणि करालजनकाय वसिष्ठेन धर्मध्वजजनकाय पञ्चशिखाचार्येण च सांख्ययोगविषये उपदेशो दत्तः राजा जनकः पञ्चशिखाचार्यात् सांख्ययोगज्ञानं प्राप्तवानिति युधिष्ठिरप्रकाशो ऽवलम्ब्यते । विष्णुपुराणे सांख्ययोगाकुशलः केशिध्वजखाण्डिक्य संवादो जनकवंशीयराज्ञां सांख्ययोगविषयकं ज्ञानं स्पष्टं व्यनक्ति ।[1] विष्णुपुराणीयः श्लोको योगभाष्ये ऽपि उपलभ्यते।[2]

याज्ञवल्क्यः-

सांख्याचार्यो याज्ञवल्क्यो दैवरातिजनकाय तद्द्वारा प्रश्ने कृते सांख्यतत्त्वानां विस्तरेणोपदेशो दत्तः।[3] संवादो ऽयं भीष्मपितामहद्वारा पुरातन इतिहास इति कथयित्वा युधिष्ठिराय श्रावितः। अस्मिन् प्रसङ्गे याज्ञवल्क्येन तत्त्वानां सम्बन्धे च उपदेशो दत्तः, तस्य सांख्येन सहात्यन्तं सामञ्जस्यं वर्तते । अस्मिन् प्रकरणे चतुर्विंशति जडतत्त्वानामेकस्य पञ्चविंशतिकस्य चेतनस्य पुरुषस्य वर्णनमुभयत्र समानरूपेणोपलभ्यते ,परन्तु महाभारते षड्विंशस्य पुरुषस्याप्युल्लेखो विद्यते । तस्य स्थितिं पञ्चविंशः पुरुषःतदैवानुभवति यदा स स्वयं कैवल्यस्थितिमुपगच्छति ।[4]

---

1. विष्णुपुराणे (6/6/7)
2. योगभाष्ये (1/28)
3. महाभारते शान्तिपर्वणि (315-323 अध्यायेषु)
4. तत्त्वानि च चतुर्विंशत् परिसंख्याय तत्त्वतः।
   सांख्याःसह प्रकृत्या तु निस्तत्त्वपञ्चविंशकः।।
   पञ्चविंशो प्रकृत्यात्मा बुध्यमान इति स्मृतः।
   यदा तु बुध्यते ऽऽत्मानं तदा भवति केवलः ।।
   (महाभारते 12/306/43-44)

याज्ञवल्क्य: स्वोपदेशे इदं रहस्यं स्पष्टयति यद् मूलं तत्त्वैकं द्वे त्रीणि वा सन्ति । एक ईश्वर:, द्वितीय:पुरुष:, तृतीया च प्रकृति:।

विष्णुपुराणे अयं इक्ष्वाकुवंशीयहिरण्यनाभतो योगविद्यां लब्धवानित्युक्तम् ।[1] श्रीमद्भागवते सांख्याचार्यं हिरण्यनाभतो हृदयग्रन्थिभेदकम् योगं याज्ञवल्क्यो गृहीतवानित्युक्तम् ।[2] ब्रह्माण्डपुराणे एतदेव समर्थयति ।[3] हिरण्यनाभ: सामशाखाध्यायी कौसलदेशीयश्चासीत् । महाभारते यं शतपथकार:प्रतीयते । कूर्मपुराणे याज्ञवल्क्यकृतं योगशास्त्रं स्मृतम् ।[4] योगियाज्ञवल्क्यग्रन्थे पातञ्जलयोगानुसारं प्राणायामविवरणमुपस्थापितमस्ति ।

पुलस्त्य:

अयं ब्रह्मणो मानसपुत्र: प्रोक्त:।[5] श्रीमद्भागवते कपिलस्य भगिनीपति:प्रोक्त:। कर्दमस्य पुत्र्या हविर्भुवा सह पुलस्त्यस्य उद्वाह: अभवत् ।[6] महाभारते मरीचिपुत्र:कश्यप: कपिलस्य भागिनेय:प्रोक्त:।[7]

---

1. विष्णुपुराणे 4/4/8
2. श्रीमद्भागवते 9/12/3-4
3. ब्रह्माण्डपुराणे -2/63/207-8
4. कूर्मपुराणे 1/25/44
5. महाभारते - [आ०प०66/10]
6. श्रीमद्भागवते 3/24/22
7. महाभारते 1/63/3

अस्य मातुर्नाम कला सीद्, या कर्दमपुत्र्यन्यतमा सीत् । श्रीमद्भागवते कपिलस्याचुत्तो महाभागो यं कथ्यते । ता कर्दमस्य-दुहितारविर्भुज सह पुलस्त्यस्योद्वाहः वर्णितो स्ति ।

महाभारतानुसारं कश्यपःमरीचेर्पुत्रः कपिलस्य भागिनेयश्चासीत् । श्रीमद्भागवते अस्य मातुर्नाम कला आसीत् । सा कला च कर्दमस्य दुहितृषु अन्यतमा आसीत् ।

जैगीषव्यः
---------

कीथमहोदयेन लिखितमस्ति यत् कूर्मपुराणवर्णनानुसारं जैगीषव्यः पञ्चशिखस्य सहाध्यायी आसीत् । अस्यां स्थितौ देवल-जैगीषव्यः-पञ्चशिखाः समकालीनाःसिध्यन्ति । महाभारताज्ज्ञायते (12/220/10) यत् पञ्चशिखो चिरदीर्घजीवी आसीत् ,तस्यान्तिमे समये सम्भाव्यते, यत् जैगीषव्यस्य तेन सह साक्षात्कारो जातः तथा तदैव तेन योगविद्यायाःअभ्यासःकृतःस्यात् । जैगीषव्येन दृढा-भ्यासात् समाधिसिद्धिरधिगता सीत् । देवलोजैगीषव्यसहयोगादेव वैराग्यं लब्धवान् सांख्यज्ञानं च तत एव प्राप्तवान् । अग्निपुराणे-प्यस्यैवं चर्चा कृता स्ति ।[2]

पातञ्जलयोगसूत्रस्य व्यासभाष्ये तत्त्ववैशारद्यां वाचस्पति-मिश्रेण जैगीषव्यःपरमर्षिःप्रोक्तः। किन्च विवेकाद्ध्यादविप्रतिपत्ति-रिति जैगीषव्य इति सन्दर्भोः जैगीषव्यनाम्ना अङ्कितो स्ति।

---

1· मरीचये कलां प्रादादनसूयामथात्रये ।
श्रद्धामङ्गिरसे यच्छत् पुलस्त्याह विर्भुजम् ।।
(श्रीमद्० )

2· कर्तव्यमिति यत्कर्म अयज्ञुलामसंज्ञितम् ।
कुरुते तेषु [illegible] गीयते ।। (अ०पु० 1/7/3। )

किन्तु न्यायवार्तिकटीकायां [3/2/42] विषेण धारणाशास्त्रं
जैगीषव्यादिप्रोक्तमित्युक्त्वा जैगीषव्यस्यापि कयाचिद् रचनया
भाव्यमित्युक्तम् । योगभाष्ये [3/18] आवट्यजैगीषव्यसंवादानु-
शीलनेन प्रतीयते यत् जैगीषव्येनणाधिसिद्धिरधिगता  सीत् ।
महाभारते शल्यपर्वणि 51 अध्याये उल्लेखोऽस्ति यत् जैगीषव्येना-
सितदेवलसम्मुखे स्वसिद्धिः प्रदर्शिता, तथा उभया सह स्द्रसर्वकीती-
कृतः।[1]

लिङ्गपुराणे [1/95/52-53] वायुपुराणे [23/138,
72/18] मत्स्यपुराणे [180/57-58] स्कन्दपुराणस्य काशीखण्डे
63 कुमारिकाखण्डे [11/152], कूर्मपुराणे 1/46, च जैगीषव्यः
श्रेष्ठो योगी शिवयोगी च प्रोक्तः। आदित्यतीर्थमहिमप्रसंगे महा-
भारतस्य शल्यपर्वणि जैगीषव्यस्य चरितं वर्णितमस्ति । शान्तिपर्वणि
[229/7-25] असितदेवलं प्रति समत्वबुद्धिविषयक उपदेशो दृश्यते।
अनुशासनपर्वणि च [18/37] शिवविषयको स्यानुभवो वर्णितो स्ति।

<u>देवलः</u>

महाभारते सभापर्वणि देवलस्योल्लेखः प्राप्यते ।[2] वायुपुराणे
योगिनः स्वरूपं स्पष्टयितुं द्वौ श्लोकौ प्राप्यते ।[3] श्लोकाविमौ कृत्य
कल्पतरौ मोक्षकाण्डे 218 पृष्ठे देवलनाम्ना उद्धृतौ स्तः।

---

1. महा० श०प० 12/236
2. त्रीणि ज्योतींषि पुरुष इति वै देवलो ब्रवीत् ।
   अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः ।। म० भा० 72/5
3. आत्मनः प्रतिरूपाणि परेषां च सहस्रशः ।
   कुर्याद्योगबलं प्राप्य तैश्च सर्वैः महाचरेत् ।।

अयं सांख्ययोगवेत्ता धर्मसूत्रकारश्चासीत् । एतस्य सांख्ययोगसिद्धान्तप्रतिपादकानि बहूनि वचनानि कृत्यकल्पतरौ मोक्षकाण्डे याज्ञवल्क्यस्मृतेःप्रायश्चित्ताध्याये १०८ श्लोके अपरादित्यरचितायामपरार्काख्यायां व्याख्यायां सांख्ययोगसम्बन्धी विपुलकाय एकःसन्दर्भःउद्धृतो ऽस्ति । तत्र देवलेन समस्ताःसांख्यसिद्धान्ता गृहीताः।

महाभारतस्य सभापर्वणि युधिष्ठिरस्य सभाप्रवेशसमये अनेकैः ऋषिभिः सह असितस्य देवलस्यापि उपस्थितिःप्रदर्शितास्ति । शल्यपर्वणि इदं वर्णनं प्राप्यते यद् देवलो जैगीषव्यस्य योगप्रभावेण गार्हस्थ्यधर्मं परित्यज्य संन्यासधर्मं गृहीतवान् ।

---

९• प्राप्नुयाद विषयांश्चैव तथैवोग्रं तपश्चरन् ।
संहरेच्च पुनः सर्वान् सूर्यतेजो गुणानिव ।।
[वायुपुराणे 66/151-152]

१• महा०भा० [स०प० 4/16]

<u>असितः</u>

ब्रह्मवैवर्तपुराणे असितस्य वर्णनं पुत्रार्थितपस्विरूपे ऽस्ति।[1] देवनिमित्तकत्वादयं देवल इति नाम्ना प्रसिद्धोजातः। एवं देवल एतत्पुराणानुसारमसितस्य पुत्रः सिद्ध्यति । अग्निपुराणे स्वयम्भुवंश वर्णनप्रसङ्गे धर्मपुत्रः प्रत्यूषःत्रयोदशपरम्परायामागच्छति ।[2] देवलः तस्यैव पुत्रःप्रोक्तः।महाभारते शान्तिपर्वणि असितदेवलयोर्द्वयोराचार्ययोरभेदस्थापनाय प्रयत्नःकृतः।[3]

कियन्तःसमालोचका असितेति पदं देवलस्य विशेषणं मत्वा असितदेवल इति एकव्यक्तेरेव नाम निर्धारयन्ति । अन्ये चासितो भिन्नो देवलश्च भिन्न इति कथयन्ति । गीतायां असितो देवलश्चैव इत्यत्र असितदेवलयोर्द्वयोः सङ्केतः प्राप्यते ।[4] ब्रह्मवैवर्तपुराणे आस्तिको देवलस्तथा इति प्रयोगो ऽस्ति ।[5] एतेनासितस्यास्तिक इत्यपि नामान्तरं ज्ञायते । अत्र देवलाष्टावक्रयोरभेदःप्रदर्शितो ऽस्ति।

एतदनुसारं गन्धमादनपर्वते देवलःतपस्यन्नासीत् । तं पथभ्रष्टं कर्तुं रम्भा नाम्नी अप्सरा समुपस्थिता । स्वमनोनीत कार्याद् देवलं विरतं दृष्ट्वा सा विकृतरूपोपलब्धये तस्मै शापं दत्तवती।

---

1. ब्र० वै०पु०-4/30
2. अ०पु० -18/440
3. आसीनं देवलं वृद्धं बुद्ध्वा बुद्धिमतां वरः ।
   नारदः परिपप्रच्छ भूतानां प्रभवाप्ययम् ।। [शा०प०272अध्याये]
4. गी० 10/13
5. ब्र०पु० 2/4/70

ततः तच्छापवशात्स देवर्षिरष्टावक्रो जातः ।

यशोदानाराप्रस्तुतायां आचार्यसूच्यां देवलाष्टावक्रौ व्यक्तिद्वयत्वे उल्लिखितौ स्तः। एतयोरन्तरे महद् व्यवधानमस्ति, येनानयोः विरोधविरोधाभावो सम्भव । अस्यां सूच्यामास्तीकस्यापि नामास्ति । अयमास्तीकादभिन्नो वक्तुं शक्यते ।

नारदः

महाभारतस्य शान्तिपर्वणि महर्षिणा वसिष्ठेन प्रोक्तौ सांख्ययोगौ नारदसकाशाद् भीष्मपितामहेन प्राप्तावित्युक्तम्।[1] किन्तु [12/329-331] अध्यायेषु व्यासात्मजशुकदेवमुनिमुद्दिश्य ज्ञानविज्ञानप्रतिपादिका योगानुसारिणो नारदोपदेशा महत्त्वपूर्णाः सन्ति । अतो यद्यपि सांख्ययोगाचार्य इत्यत्र न काचित् संशीतिः। अयं नारदो देवर्षिनारदाद्भिन्नः प्रतीयते ।

व्यासः-

कृष्णद्वैपायनो महर्षिव्यासो महाभारतस्य शान्तिपर्वणि चतुर्विंशत्यध्यायेषु स्वात्मज भगवन्तं शुकदेवं प्रति यदुपदिष्टवान्।[2] तत्सर्वं सांख्ययोगानुसारमेवास्ति । अतो यद्यपि सांख्ययोगाचार्य आसीदित्यत्र नास्ति शङ्कापङ्कलङ्कलेशः ।

---

1. म० भा० 308/44

2. म०भा० 231/254

हारीत:

माठरवृत्तौ निर्दिष्टानां सांख्याचार्याणां सूच्यां सांख्याचार्यस्य हारीतस्योल्लेखो ऽस्ति । महाभारते ह्यस्याप्यनेकेषु स्थलेषु वर्णनमुपलभ्यते । कृत्यकल्पतरौ मोक्षकाण्डे हारीतनाम्ना अनेके सन्दर्भा उद्धृता उपलभ्यन्ते । यत्र वानप्रस्थयतिधर्मादीनां वर्णनमस्ति ।

युक्तिदीपिकाख्यायां सांख्यकारिकाव्याख्यायां वार्षगण्यपतञ्जलि-गौतम-गर्ग-वाद्वलि-कैरात-पौरिक-ऋषभदेव-पञ्चाधिकरण-कौण्डिन्य-मूकानां सांख्याचार्याणां नामानि निर्दिष्टानि। एषामाचार्याणामियं सूचीकालक्रमानुसारं नोपस्थापिता ऽस्ति, किन्तु इदं निश्चयं वक्तुं शक्यते यदिमे आचार्या महाभारतयुद्धानन्तरम् ईश्वरकृष्णात् पूर्वभाविन:सन्ति ।

उलूक:

उलूकात् औलूक्यदर्शनं प्रसिद्धं गतम् ।यस्य विस्तर: कणादऋषिणा पश्चाद् कृत:। पूर्वं अयं सांख्यस्य आचार्य: आसीत् पश्चात् अनेन सांख्यस्य अभिमतानि तत्त्वानि एकस्मिन् नवीने क्रमे विनिवेश्य एकं नूतनं दर्शनं उपस्थापितम् । उलूकस्य सांख्याचार्यत्वे त्रीणि प्रमाणानि उपलभ्यन्ते -

1. प्रथमं प्रमाणं चीनानुवादेन प्राप्ता परम्परायास्ति। यदनुसारेण अनेन गर्गात् पश्चात् स्थानं प्राप्यते ।
2. द्वितीयं प्रमाणं माठरवृत्तिरस्ति, या इमं भार्गवात् अनन्तरं कथयति । अत्रापि भार्गव: पञ्चशिखादनन्तरं रक्ष्यते । येन अयं पञ्चशिखात् तृतीयाचार्यत्वेनपरिगण्यते

---

1. सांख्यकारिका ।2

3. तृतीयं प्रमाणं वायुपुराणस्यास्ति यत् प्रतिपादित-मस्ति यत् अयं महान् योगी, महात्मा तथा निर्मला-बुद्धिरासीत् ।

वार्षगण्य:
--------

वार्षगण्य:सांख्ययोगस्य विश्रुत:आचार्य:आसीत् । अस्य नाम महाभारतस्य सांख्याचार्याणां सूची प्राप्यते । चीनपरम्परायां तिब्बतपरम्परायाञ्च अस्य नाम वृष:वृषगणो वा प्राप्यते य: संस्कृत शब्दस्य वर्षस्य वार्षगण्यस्य वा विकृतं रूपं प्रतीयते ।

कथासरित्सागरे वार्षगण्यस्योल्लेखो[1]ऽस्ति । युक्तिदीपिकायाम् {108पृष्ठे} सांख्यतत्त्वकौमुद्याम् 47 कारिकायां, योगसूत्रस्य व्यासभाष्ये {3/52} भामत्यां {2/1/3} नाट्यायनश्रौतसूत्रे {10/9/10} निदानसूत्रे {33पृष्ठे} वार्षगण्यस्य चर्चा कृता ऽस्ति ।

माठराचार्येण सांख्यस्य गुरुशिष्यपरम्परा एवमुक्ता ऽस्ति कपिलादासुरिणा सांख्यं प्राप्तम्, तत:पञ्चशिखेन प्राप्तम् ।ततो भार्गव उलूक-वाल्मीकि-हारीत-देवलप्रभृतिभि: प्राप्तम्, तत:ईश्वरकृष्णेन प्राप्तम्। एतेन देवलेश्वर कृष्णयोर्मध्ये नैक आचार्या अभूवन् येषामस्यां परम्परायां नामोल्लेखोनास्ति । माठरानुसारं कपिल-आसुरि-पञ्चशिखानाम-विच्छिन्नपरम्परातिरिक्तं भार्गव-उलूक-वाल्मीकि-हारीत-देवलानां साक्षान्नाम निर्दिष्टं वर्तते । जयमङ्गलायां गर्गगौतमावपि स्मृतौस्त:।

---

1. स च {व्याडि}भगवतो वर्षस्य शिष्यो नन्दसमकालीन:पाणिनि-सूत्राणां संग्रहाख्यटीकाया: कस्यचित् कोषस्य च कर्ता दाक्षायणे: पतञ्जलेरपि पुरोगामी सांख्ययोगाचार्य:।

{क0स0सा0 1-2}

79

युक्तिदीपिकाकारेण सांख्यमतस्वीकर्तृष्वाचार्येषु मनुनारायणदैपायना अपि उल्लिखिता:सन्ति ।

पतञ्जलि:

पतञ्जलिनामानो नैके आचार्या अभूवन् ।योगसूत्रकार:, निदानसूत्रकार:,महाभाष्यकार:,परमार्थसारकार:,कोशकार:, चरकप्रतिसंस्कर्त्ता सांख्याचार्यश्च । युक्तिदीपिकायामुद्धृत:पतञ्जलि योगसूत्रकाराद् व्याकरणभाष्यकाराद् चरकप्रतिसंस्कर्तुश्च पतञ्जले: सर्वथा भिन्न एवास्ति । सांख्ये स्यैका स्वतन्त्रा विचारधारा प्रचलति । अयमहङ्कारस्य पृथक्सत्तां न स्वीकरोति,किन्तु महत एव एकादशेन्द्रियाणां फकक पञ्चतन्मात्राणाञ्च उत्पत्तिं स्वीकरोति। परं योगसूत्रकारो भगवान् पतञ्जलि:महतो हङ्कारस्य तत इन्द्रियाणां पञ्चतन्मात्राणाञ्चोत्पत्तिमङ्गीकरोति । एवं पतञ्जलिविषये महान् मतभेदो ऽस्ति ।

व्याकरणे शब्दानुशासनं कुर्वता ,पातञ्जलसूत्रेषु वृत्तिं रचयता राजमृगाङ्काभिधं वैद्यकग्रन्थो प्रणयता येन भोजदेवेन यथा फणिभृतां भर्त्रेव पतञ्जलिना "वाक्चेतोवपुषां [वाणी,बुद्धि-वपुषाम्] मल:फणिभृतां भर्त्रेव येनोद्धृत:, इति ब्रुवन् भोजराज: स्ववृत्तौ योगसूत्रकारो महाभाष्यकारश्चरकप्रतिसंस्कर्ता चेति त्रीनपि एक एव व्यक्तिं भगवन्तं पतञ्जलिं मनुते ।

---

1. शब्दानामनुशासनं विदधता पातञ्जले कुर्वता ।वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके ।वाक् चेतो वपुषां मला: फणिभृतां भर्त्रेव येनोद्धृत:।
एतस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वला: ।।भोजराज:।

भर्तृहरिरपि वाक्यपदीये [1/147] एतदेव स्वीकरोति। वाक्यपदीयव्याख्याकारः पुण्यराजोऽपि चिकित्साशास्त्रं [चरकम्] लक्षणशास्त्रं [व्याकरणभाष्यम्] अध्यात्मशास्त्रं [योगम्] चेदं निर्दिशन्। एषां त्रयाणां रचनया पतञ्जलिना शरीरवाणीबुद्धीनां दोषा दूरीकृता इति मन्यते । अत एक एव पतञ्जलिः त्रयाणां रचयिता सिद्ध्यति । अतएव चक्रपाणिना[1] चरकटीकाया आरम्भे कुर्वता कृतं मङ्गलाचरणं संगच्छते ।

महाराजसमुद्रगुप्तरचिते कृष्णचरिते महाकाव्ये पतञ्जलि विषयकौ द्वौ श्लोकौ उपलभ्येते । ताभ्यां स्पष्टं प्रतीयते यत् पतञ्जलेः सम्बन्धः व्याकरणेन चरकेण योगविद्यया चावश्यकमासीत् ।

वर्लिनसूचीपत्र-मैक्समूलरयोरनुसारं कात्यायन सर्वानुक्रमणी व्याख्याकर्ता षड्गुरुशिष्येण प्राप्यते ।[2]

अत्र पतञ्जलि व्याकरणभाष्ययोगसूत्रनिदानस्थानां प्रणेता स्वीकृतोऽस्ति । परन्तु मैकडानलद्वारा सम्पादितकात्यायनसर्वानुक्रमणी-

---

1\. योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।
   योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि।।
   [चरकटीकायां]

2\. यत् प्रणीतानि वाक्यानि भगवांस्तु पतञ्जलिः।
   व्याख्याच्छान्तनवीयेन महाभाष्येण हर्षितः ।।
   योगाचार्यः स्वयं कर्ता योगशास्त्रनिदानयोः।।

81

टीकायां वेदार्थदीपिकायां न पूर्वोक्तः श्लोक उपलभ्यते । भिक्षुवरेण कुतो गृहीत इति स एव जानातु इति उदयवीरशास्त्रिणा मतम्।[1]

रामगोविन्दत्रिवेदिना एक एव पतञ्जलिः योगसूत्रस्य महाभाष्यस्य च कर्ता स्वीकृतः। वासुदेवशास्त्रिणा अभ्यङ्करेणापि एतदेव समर्थितम् । पुनरपि चरकव्याख्याकारः चक्रपाणिरपि पातञ्जल-योगदर्शनं व्याकरणमहाभाष्य चरकप्रतिसंस्कार द्वारा मनोवाणी देहदोषदूरकर्तारम् पतञ्जलिं नमस्कुर्वन् एतदेव समर्थयति ।[2]

अपि वाच्युतग्रन्थमालाकाशीतो मुद्रितस्य परमार्थसारस्य प्रारम्भिके वक्तव्ये तत्सम्पादकेन श्रीसूर्यनारायणशुक्लमहोदयेन महाभाष्य योगसूत्रयोः रचयिता चरकस्य प्रतिसंस्कर्ता पतञ्जलिरेव परमार्थसारस्यापि प्रणेतास्तीत्युक्तम्, परन्तु अस्य विचारस्य पुष्ट्यै नायावधि किञ्चि-दैतिहासिकं प्रमाणमुपलब्धम्, नापि शुक्लमहोदयेनास्य कश्चिदाधार उपन्यस्तः।

अतः सांख्याचार्यपतञ्जलेः योगसूत्रादिकर्ता पतञ्जलिः सर्वथा ऽस्ति भिन्नव्यक्तिः। सांख्याचार्यस्य पतञ्जलेरनेकेषां मतानामुल्लेखो युक्ति-दीपिकायामुपलभ्यते । यदनुशीलनेन निश्चीयते यत्परमार्थसारकर्तुः पतञ्जलेः सांख्याचार्यपतञ्जलिः भिन्नो ऽस्ति । युक्तिदीपिकायामुपन्य-स्तादेतन्मताद् ज्ञायते यदयं पतञ्जलिः महदहङ्कारौ एकं तत्त्वं मत्वा

---

1. सांख्यशास्त्र का इतिहास [511 पृष्ठे]

2. पातञ्जल-महाभाष्य -चरक-प्रतिसंस्कृतैः ।
   मनोवाक्कायदोषाणां हन्त्रे ऽहिपतये नमः ।।
   [दर्शन परिचय पृ0 179-186]

करणानां संख्या 12 स्वीकृता- एवं तर्हि नैवाहङ्कारो विद्यते इति पतञ्जलिः [युक्तिदीपिकापृष्ठ 32 पंक्ति 1-2] करणं द्वादश-विधं [युक्तिदीपिकापृष्ठ 132], परन्तु परमार्थसारे न्यसांख्याचार्यवत् 13 करणानि स्वीकृतानि । एतदतिरिक्तं सांख्याचार्याणां साधारणं मतमस्ति यत् करणादि प्रतिपुरुषं एकस्य शरीरस्य सम्बन्धी भवति, तदेवाप्रलयं आमोक्षवत् तत्त्वज्ञानपर्यन्तं तिष्ठति, परन्तु युक्ति-दीपिकायां वर्णितः सांख्याचार्यपतञ्जलिः एतन्मतं न मनुते । स स्थूलदेहस्योत्पत्तिविनाशवत् सूक्ष्मशरीरस्योत्पादविनाशावपि स्वीकरोति ।[1]

कौण्डिन्यो मूकश्च-

ईश्वरकृष्णकृतायां सांख्यकारिकायां 71कारिकाया युक्ति-दीपिकायां कौण्डिन्यमूकयोरपि आचार्ययोरुल्लेखोऽस्ति । परमनयोः सम्बन्धे एतावदेव वक्तुं शक्यते यद्युक्तिदीपिकायामन्यैः आचार्यैः सहैतयोरपि नाम्नी निर्दिष्टे स्तः। नानयोः सम्बन्धे किञ्चिदन्यज्ज्ञायते ।

उदयवीरशास्त्रिणो मतानुसारं युक्तिदीपिकायां यः सांख्या-चार्याणामुल्लेखोऽस्ति स कियान् पाठः खण्डितो शुद्धोऽस्ति एतस्य विचारे मूकस्थाने शूक इति पाठः समीचीनः सम्भवति सांख्याचार्याणा-मिमां सूचीं पूर्णां कथयितुं न शक्यते, सम्भवतो नैकेषामाचार्याणां सूची

---

1• युक्तिदीपिका, पृ०- 144-145

8:5

पूर्णं कथयितुं न शक्यते, सम्भवतो नैकेषामाचार्याणां नामानि च विस्मृतानि स्युः। तत्र वर्णितेषु आचार्येषु बहूनां नामानि पुराणे-तिहासप्राचीनग्रन्थेभ्यः, सांख्यकारिकाटीकाभ्यश्च संगृहीतानि सन्ति। येषामुल्लेखः पञ्चशिखानन्तरमीश्वरकृष्णात्पूर्ववर्तिनीं गुरुशिष्यपरम्परां बोधयितुं कृतो ऽस्ति। अत इमे सांख्याचार्याः ईश्वरकृष्णाद् पूर्ववर्तिन इति निश्चप्रचं मतमस्ति।

विन्ध्यवासी-

प्रसङ्गवशादेकस्येश्वरकृष्णपरवर्तिनो परस्य सांख्याचार्यस्य विन्ध्यवासिन उल्लेखः आवश्यकः प्रतीयते, यस्य नाम्ना अनेके सन्दर्भा युक्तिदीपिकायाः (3, 4, 108, 144 पृष्ठेषु) उपलभ्यन्ते। हरिभद्र-सूरिकृतषड्दर्शनसमुच्चयस्य गुणरत्नसूरिकृतव्याख्यायाः (104) तथा स्याद्-वादमञ्जर्याः (15 पृष्ठे), विन्ध्यवासी स्वेवमाचष्टे।[1]

कमलशीलकृततत्त्वसंग्रहपञ्जिकायाः (22 पृष्ठे) ऽपि अस्य नामास्ति।[2]

योगसूत्रस्य भोजवृत्तौ (4/22) अनेनैवाभिप्रायेण विन्ध्य-वासिनोक्तं सत्त्वतप्यत्वमेव पुरुषतप्यत्वमिस्युक्तम्।

दिवाकरकृतसन्मतितर्के अभयदेवसूरिकृतव्याख्यायाः (533 पृष्ठे), शास्त्रवार्तासमुच्चयस्य टीकायाः शास्त्रवार्तासमुच्चय स्याद्वादकल्पलतायाः (109 पृष्ठे) मनुस्मृतेः मेधातिथिभाष्ये च (1/55) विन्ध्यवासिनो मतस्योल्लेखो विद्यते।

---

1. पुरुषो विकृतात्मैव स्वनिर्भासमचेतनम्।
   मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा॥ (स्याद्वादमंजरी)

रुद्रिल:

विन्ध्यवासिन: वास्तविकं नाम रुद्रिल आसीत् । विन्ध्याटव्यां निवासत्वादेवास्य नाम विन्ध्यवासीति प्रथितम्। हैमकोषानुसारं व्याडिरेव नाम विन्ध्यवासी आसीत् ।

ईश्वरकृष्ण: -

सांख्यदर्शनस्येतिहासे महाशयस्यास्य नाम समादरेण स्मृतिपथं नीयते । यद्यप्यस्य सम्बन्धे अद्यत्वे पि नितान्ताधिगम्यते, तथापि विद्वत्सु बहव:मतभेदा: सन्ति । अनेन एवावभासते यदीश्वरकृष्ण: सांख्यदर्शनस्य विशिष्टां शिक्षां पुनरपि प्रकाशयितुमेव "सांख्यकारिका" प्रणीतवान् । बौद्धभिक्षुणा परमार्थेन सुबन्धुचरितस्य रचनया सार्धमेव सांख्यकारिकाया:अनुवाद:चीनीभाषायामपिकृत:। यस्य नाम "सुवर्णसप्तति, कनकसप्तति, हिरण्यसप्तति"वास्ति। अस्य महाभागस्य काल: डा0कुसुमहोदयानुसारं पन्चम:ख्रिष्टाब्द: मन्यते । डा0विद्याभूषणेन सुबन्धु-इश्वरकृष्णयो: कालं समसामयिकं मन्यते । तदनुसारमेव चतुर्थशताब्द्यामस्य समय:निर्धारित:। डा0वैसेण्टस्मिथेनापि एवमेवास्य समय:समर्थितो स्ति । [1]डा0दासगुप्तेन ईश्वरकृष्णस्य समय द्वितीयशताब्द्यां मन्यते । वेल्वल्करमहोदयेनास्य समय:प्रथमशतकं मन्यते । डा0गोपीनाथकविराजेन उदयवीरशास्त्रिण तथैवान्ये विद्वद्भि:एवमेव स्वीकुर्वन्ति। माठरवृत्ति:सांख्यकारिकाया: प्राचीनतमा टीका अस्ति ।यस्य समय:विद्वांस:प्रथमशतकं आमनन्ति।

---

*- यदेव दधि तत्क्षीरं यत् क्षीरं तद्दधीति च ।
वदता रुद्रिलेनैव स्थापितो विन्ध्यवासिना।। [सरस्वतीकण्ठाभरणे]

1- स्मिथ का हिस्ट्री आफ इण्डिया । -पृ0 328

माधवः

यद्यपि तत्त्वसंख्याग्रन्थेषु सांख्याचार्याणां सूचीषु, सांख्याचार्यमाधवस्योल्लेखो नास्ति, परन्तु अन्येषु ग्रन्थेषु सांख्याचार्यरूपेण माधवस्य नामोपलभ्यते । माधवोऽयं परिव्राजकमाधवात् सर्वथा भिन्नः। मीमांसाश्लोकवार्तिकस्योम्बेकभट्टकृतव्याख्यायां चोदनासूत्रश्लोके [240] हिंसा यज्ञीया अधर्मजनिका नवेति प्रसङ्गे सांख्यमतप्रकटनपूर्वकं निर्णीतमस्ति यद् यज्ञीयापि हिंसा वस्तुतोऽधर्ममुत्पादयति । अत एव गीतायां "यज्ञानां जपयज्ञोऽस्मि" [10/25] इत्यनेनाहिंसाजनकत्वाद् जपयज्ञस्य प्राशस्त्यमुक्तम् । उम्बेकेन प्रसङ्गागतस्य श्लोकस्य व्याख्यां कुर्वता लिखितमस्ति यत् सांख्यनायको माधवस्त्वाह-" अनेन स्पष्टं प्रतीयते यदुम्बेकः सांख्याचार्यमाधवादस्ति सम्यक्परिचितः।

बौद्धग्रन्थे धर्मकीर्तिप्रणीतप्रमाणवार्तिकस्य व्याख्यां कुर्वता कर्णगोमिना लिखितं यद् आहो पुरुषकस्येत्यहं भाविस्तेन यथा सांख्यनाशकमाधवेन सांख्यसिद्धान्तस्य अन्यथा रचनं कृतम् ।उम्बेकः यं माधवं सांख्यनायकं वदति तमेव कर्णगोमी सांख्यनायकं कथयति । अत्रेदं रहस्यम्-

माधवपूर्ववर्तिभिर्वादिविद्भिः कपिलसिद्धान्तो यस्मिन्रूपे ज्ञातः तद्रूपस्य माधवेन युक्तिभिर्विरोधं कृत्वा कपिलस्य वास्तविकमभिप्रायं प्रकाश्य बौद्धविदुषामज्ञानं विनाशितम् । माधवेन सांख्यसिद्धान्तस्य यस्मिन् रूपे प्रतिपादनं कृतं तद्रूपं कर्णगोमिनो भावनायाः प्रतिकूलमासीत् । अतस्तदर्थं तेन सांख्यनायक इति पदं प्रयुक्तम् । कर्णगोमिर्यं सम्प्रदायमनुसरति स्म । तत्र सांख्यसिद्धान्तस्य यद्रूपमवगत-

मासीत् तद्विपरीतो माधवेन स्वकीयो विचारो व्यक्तीकृतः, समुद्घाटितञ्च कपिलसांख्यस्य वास्तविकं रहस्यम् ।

चीनयात्रिणो ह्वेनच्यांगस्य यात्रावर्णने सांख्याचार्यस्य माधवस्योल्लेखो ऽस्ति । अयं मगधप्रान्ते गयापरिसरे निवसति स्म। राज्यतःपर्याप्ता भूमिःअस्मै दानरूपेण दत्ता ऽऽसीत् । राज्यपरिषदि तस्य महती प्रतिष्ठा ऽऽसीत् । अयं महाविद्वान् सांख्याचार्यनाम्ना प्रसिद्ध आसीत् । कालान्तरे तत्रत्येन तात्कालिकेन राज्ञा समायोजितायां सभायां दक्षिणदेशनिवासिना गुणमतिबोधिसत्त्वनामकेन बौद्धविदुषा सहास्य शास्त्रार्थो ऽभवत् । ह्वेनच्यांगस्य लेखानुसारं बोधिसत्त्वस्य वैदुष्येण प्रभावितो राजा तस्मै बौद्धसंघारामं निर्मापितवान् । चीनीयात्रिणा स्यैव संघारामस्य वर्णनप्रसङ्गे सांख्याचार्यस्य माधवस्योल्लेखो विहितो ऽस्ति ।

एवं च पुराणेषु महाभारते च सांख्यस्यानेकेषामाचार्याणां यो निर्देशःसमुपलभ्यते, तत्र कपिलासुरिपञ्चशिखवसिष्ठयाज्ञवल्क्यव्यासप्रभृतयःसन्ति प्रधानाः। सांख्यकारिकायां, सांख्यसूत्रे च केवलं सांख्याचार्याणामासुरिपञ्चशिखसनन्दनामेव नामान्युपलभ्यन्ते । सांख्यकारिकायां प्राप्तसांख्याचार्याणां परम्परा अस्पष्टा ऽस्ति ।अत्र पञ्चशिखात् ईश्वरकृष्णस्य मध्ये महद् व्यवधानं विद्यते । एतदेव स्पष्टीकर्तुं युक्तिदीपिकायां माठरवृत्तौ जयमंगलायां च महान् प्रयासःकृतो ऽस्ति। एषु कियतामाचार्याणां नामानि गणयित्वा इत्यादिप्रभृतिपदयोजनयापीयं परम्परा अस्पष्टैव स्थापिता । परमार्थो ऽपि केवलं पञ्चानां

नामनिर्देशो ऽस्ति यो ऽपि महतीं सांख्यपरम्परां बोधयितुमपर्याप्तो-
ऽस्ति । युक्तिदीपिकायां पञ्चाधिकरणपतञ्जलिवार्षगण्यैः सह
हारीतबाद्धलिकैरातपौरिकऋषभेश्वरकौण्डिन्यमूकानां नामान्युट्टङ्कितानि
सन्ति । माठरवृत्तौ भार्गवोलूकवाल्मीकि हारीतदेवलानां नाम
निर्दिष्टमस्ति । जयमंगलायां गर्ग-गौतमयोरुल्लेखो ऽस्ति परमार्थे गर्ग
उलूकस्योपदेशक उक्तो ऽस्ति । उलूकानन्तरमत्र वाद्धलेर्नामास्ति ।
जैनग्रन्थे तत्त्वार्थराजवार्तिके ऽपि स कपिल गार्ग्याभ्यां सह अक्रिया-
वादिषु गणितः। गार्ग्य उलूकादभिन्नः प्रोक्तः। एवं कपिलानन्तरं
गार्ग्योलूकवाद्धलयःपरमार्थग्रन्थाधारे क्रमिकरूपेण स्वीकर्तुं शक्याः।

## तृतीयोऽध्याय:

## मार्कण्डेय पुराणे प्रकृतिपुरुष विमर्श:

### 1. प्रकृते: स्वरूपम् -

मार्कण्डेयपुराणे यद्यपि सांख्यदर्शनरीत्या प्रतिपादिता प्रकृति:साक्षान्नोपलभ्यते, यथा अन्यपुराणेषु उपलभ्यते । का विलक्षणा प्रकृति:गदितेति पुराणोपदेष्टार: जानन्त्येव । ब्रह्मवैवर्तपुराणस्य प्रकृतिकाण्डे प्रकृतिशब्दार्थ अभिहित:।[1] वायुपुराणे[2], कूर्मपुराणे,[3] ब्रह्माण्ड पुराणे,[4] मत्स्यपुराणे[5] पद्मपुराणे,[6] देवीभागवते[7] च प्रकृतिवर्णनमुपलभ्यते।

प्रकृष्टा कृति: कार्यं वा यस्या:सा प्रकृति:अथवा सर्वं प्रकरोतीति प्रकृति:" इति प्रकृतिशब्दस्यार्थ विवेचनात् निखिलस्यास्य जगत:कर्तृ, भर्तृ, संहर्तृ च प्रकृतिरेवेति ज्ञेयम् । प्र उपसर्गात् "डुकृञ्करणे धातो:"

---

1. त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता ।
   प्रधानसृष्टिकरणे प्रकृतिस्तेन कथ्यते ।। [ब्र0वै02/1/8]
2. अव्यक्तं कारणं यत्तु नित्यं सदसदात्मकम् ।
   प्रधानं प्रकृतिं चैव यमाहु:तत्त्वचिन्तका:।। [वा0पु0 1/4/18]
3. सत्त्वं रजस्तमश्चेति गुणत्रयमुदाहृतम् ।
   साम्यावस्थितिमेषामेतेमव्यक्तां प्रकृतिं विदु:।। [कू0पु03 07/26]
4. ब्र0 पु0 1/5/103
5. सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् ।
   साम्यावस्थितिरेतेषां प्रकृति:परिकीर्तिता।। [म0पु03/14]
6. सांख्या वदन्ति पुरुषं प्रकृतिञ्च यां
   तां चैतन्यभावरहितां जगतश्च कर्त्रीम् ।
   किं तादृशासि कथमत्र जगन्निवास:।
   चैतन्यताविरहितो विहितस्त्वया च।। [प0पु0 1/7/29]

तिच् प्रत्यये कृते सती प्रकृति इति शब्दो निष्पद्यते । तथा अमर-कोषे प्रधानं प्रकृतिश्च स्त्रीत्वविवक्षायां सत्त्वरजतमोगुणानां साम्यावस्थाया एव नाम ।[1] मेदिनीकोषे च सैव प्रकृतिःगुणानामेव साम्ये अमात्यादि स्वभावे योनि-लिङ्ग-पौरवर्गादिषु च निरूपिता विद्यते ।[2]

यदा हि देव्याः महिमानं मार्कण्डेयपुराणे विवृणोति तदा प्रकृतिरूपायाः भगवत्याः त्रिगुणात्मिकायाः स्वरूपमुपपादयति।[3] सैव महाविद्या-महामाया-महामेधा-महास्मृतिःसती माहेश्वर्यमधिष्ठाय चराचरं जगत् संमोह्य योगमायारूपेण भगवान् सर्वलोकान् मुह्यति।[4] किञ्च तिसृणां रात्रीणां कालरात्रि-महारात्रि-मोहरात्रिरूपाणां गुणत्रयविभावयित्रि सर्वस्य लोकस्य प्रकृतिस्त्वमावहति ।[5] एवमेव सांख्या-

---

*. केचित्तां तप इत्याहुस्तमः केचिज्जडं परे ।
ज्ञानं मायां प्रधानं च प्रकृतिं शक्तिमप्यजाम् ।।दे०भा०7/32/९

1. प्रधानं प्रकृतिःस्त्रियाम् ।- अ०को० 1/5/28

2. प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः ।
योनौ लिंगे पौरवर्गे ।। [मे०को०63/132]

3. विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपान्ते जगतो स्य जगन्मये ।। [मा०पु०78/57]

4. महाविद्या महामाया महामेधा महास्मृतिः ।
महामोहा भगवती महादेवी महेश्वरी ।। [मा०पु०78/58]

5. प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ।। [मा०पु०78/59]

सौम्यरूपा सती सा श्री, ह्री:ईश्वरी, बोधलक्षणा, बुद्धि-लज्जा, पुष्टि:, तुष्टि:-शान्ति:, क्षान्तिरूपा च खड्गं, शूलं, गदां, चक्रं चापं, बाणं, भुशुण्डीं परिघायुधान्याधाय सौम्यविभक्तरूपत्वादधति, पराशक्तिस्वभावात् समस्त लोकस्याराध्या महाशक्ति:मार्कण्डेयपुराणे सागदिता । तथैव मधुकैटभौ योगमायया सम्मोह्य व्यापकं सत्व-प्रधानं वैष्णवतत्त्वं विस्तारयति असुरान् निहत्य प्राकृतं विधानं रक्षति च ।

अतेदं तत्त्वं सांख्यदर्शने प्रकृति:पुरुषश्च विपरीतस्वभावौ पृथक्-पृथक् आस्ताम् । रंगशालायामात्मानं नृत्यन् दर्शकेभ्य:प्रस्तूय सा निवर्तते । यैश्च तथाविधां प्रकृतिं दृष्टं तेषां पुरत:प्रकृति: कदापि प्राकृतलीलां प्रदर्शनाय नोपैति । उभयोश्च सम्बन्ध:पंगवन्ध यदोक्त:। अत्र उपर्युक्तवर्णनेन मार्कण्डेयपुराणे प्राकृतविषयकं तत्त्वा-ख्यानकं शक्तिरूपेणोपदिष्टम् । अत:सा सन्ध्या -सावित्री-परा-सृष्टि-स्थिति-संहारिका भूत्वा महाशक्तिरूपेण विलसति समुल्लसति च शाक्तानामाराधनविषयभूता ।

किन्च देव्यास्तत्त्वनिरूपणप्रसङ्गे दुर्गासप्तशत्यां पन्च माध्याये मार्कण्डेयपुराणे च द्यशीत्या ध्याये "नमो देव्यै महादेव्यै शिवायै सततं नम:। नम:प्रकृत्यै भद्रायै नियता:प्रणता:स्मृताम् ।।[2]

---

1. त्वमेव संध्या सावित्री त्वं देवी जननी परा ।।

(मा०पु० 78/65)

2. मा०पु० -82/7

इत्यत्र प्रकृत्यै इति प्रतीकमादाय देव्याः शिवायै इति पदेन शिवस्याभिन्नत्वं सूचितम् । महादेव्यै इति पदेन च समस्तदेवीनां जनयितृत्वेन प्रकृत्याः शिवत्वं साधितम् । सैव धात्री जगतः प्रतिष्ठात्री अस्ति । अतः तदर्थं मुनेर्नमस्कारः । अदिदमपि तत्त्वं चिन्त्यम् यदि सांख्यकारिकायां प्रकृतेः यद्रूपमुपवर्णितं, सा नूनं नैव सत्त्वप्रधाना न च जगतः प्रतिष्ठापकत्वेन शक्तिरूपा देवभूता [1] । सा च जडा, परिणामस्वभावा, प्रकृतिविकृतिमहिमामण्डिता च दृश्यते । अतः तस्या भिन्नैव प्रकृतिः मार्कण्डेयपुराणे निरूपिता इति तत्त्वविदो जानन्त्येव ।

प्रकृतिः यथा देवीतत्त्वमीमांसायां मार्कण्डेयपुराणे प्रतिष्ठापिता, तथैव अन्यप्रसंगेऽपि भगवतः सृष्टिकामस्यैव प्रकृतिभूता सती सृष्टिसंहारदशायां स्थानं विस्तारयति उपसंहरति च [2] । सत्त्वरजस्तमोगुणानां साम्यावस्थैव प्रकृतिरिति सिद्धान्तपक्षः । यदा गुणेषु वैषम्यं जायते तदैव सृष्टिर्भवतीति तेषां प्रकृतिवादिनां सिद्धान्तः । तत्र सत्त्वरजस्तमःप्रधानेषु सृष्टिक्रमेष्वपि सत्त्वरजस्तमःस्वपि च सत्त्वतमसोः तमसि च सत्त्वरजसोः सम्मिश्रणं भूत्वैव सर्गो जायते [3] ।

---

1. मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । सां०का०३

2. काले वै प्रलयस्यान्ते सर्वस्मिन्नुपसंहृते ।
यदा तु प्रकृतौ याति लयं विश्वमिदं जगत् ।
प्रकृतिः पुरुषश्चैव साधर्म्येणावतिष्ठतः ।। मा०पु०४३/२-३-४

3. तिलेषु वा यथा तैलं घृतं पयसि वा स्थितम् ।
तथा तमसि सत्त्वे च रजो ऽप्यनुसृतं स्थितम् ।। मा०पु०४३/६

93

परमेश्वरः परमयोगेन प्रकृतिपुरुषौ प्रविश्य तौ च क्षोभयित्वा प्रकृतिमाध्यमेन जगद्रचयति ।[1] वस्तुतस्तु परमेश्वर एव प्रकृतेःपतिः सत्त्वेन प्रकृत्या क्षुभ्यःतस्याश्क्षोभकः सन् प्रकृतावपि प्रविष्टःसृष्टिमुत्पादयति ।[2]

एवमेव प्रकृतेःसमन्वयात्मकं स्वरूपं तत्र-तत्र मार्कण्डेयपुराणे समुपपन्नमिति मया संक्षेपेण किञ्चिन्निगदितमिति तत्त्वविदो विभावयन्तु

2· <u>पुरुषस्य स्वरूपम्</u> -

पुरति अग्रे गच्छति इति पुरुषःइति व्युत्पत्त्या "पुर अग्रगमने" इति धातोः औणादिके कुषन् प्रत्यये पुरुषःइतिरूपं भवति। यद् वा पूरयति इति पुरुषः,अथवा पुरि शेते इति पुरुषः। अत्रापि औणादिकः कुषन् प्रत्ययःअमरकोषे पुरुषस्य त्रयःपर्यायवाचिनःशब्दाः उपलभ्यन्ते ।[3] पुंसि च आत्मनि नरे पुंनागे च पुरुषशब्दः प्रयुक्तः।[4] नागकेसर वृक्षस्यापि पुरुष इति संज्ञा अमरकोषे कथिता ।[5] एवमेवान्यकोषेष्वपि पुरुषशब्दःप्रतिपादित तात्पर्येण निरूपित इति तत्र-तत्र सुधीभिर्विज्ञेयम् ।

---

1· प्रविश्य प्रकृतिं पुरुषं चैव प्रविश्याशु जगत्पतिः ।
क्षोभयामास योगेन परेण परमेश्वरः ।। मा०पु०43/11 ।।

2· स एव क्षोभकः पूर्वं स क्षोभ्यःप्रकृतेःपतिः ।
स संकोचविकाशाभ्यां प्रधानत्वे पि संस्थितः।।मा०पु०43

3· क्षेत्रज्ञ, आत्मा,पुरुषः । अ०को० 1/4/29 ।

4· हैम को० 3/78।

5· पुंनागे पुरुषस्तुंगकेसरोदेववल्लभः। अ०को०2/4/25 ।

अतेदं तत्त्वम्- सांख्ययोगप्रतिपादिते गीतामीरिता निरूपितश्च पुरुष:नूनं कामपि विलक्षणमर्थमभिप्रेत्य विराजतेतमाम् । तन्त्रागमदर्शनेषु च पुरुषस्यान्वाख्यानं आत्मरूपेण प्रतिपादितम् । क्वचिद् च पुरुषस्य महेश्वर रूपेणाप्यान्वाख्यानं[1] दृश्यते । क्षेत्र-क्षेत्रज्ञरूपेण मायापुरुषौ गीतायां निरूपिते ।[2] सांख्यकारिकायान्तु प्रकृतिविकृतीनां मध्ये पुरुषस्य न प्रकृतित्वं न च विकृतित्वमेव साधितम् ।[3] किन्तु पुरुष: पुष्करपलाशवन्निर्लेप:द्रष्टा, साक्षी, चिन्मय:, कैवल्यान्वयी, संसर्गहीनश्च ।[4] यो हि पुरुष:प्रकृतिं नर्तकीमिव परिचिनोति,[5] तस्मात् प्रकृति:उपरज्यते,पुरुषोऽपि तथोदासीन: पुन: प्रकृतिं नोपैति ।[6]

एवं सर्वत:प्राचीनयो:सांख्ययोगदर्शनयो:प्रभाव:पुराणेषु यत्र-तत्र सर्वत्र निपतित एवेति अत्र बहुवक्तव्येन । सर्वपुराणेषु

---

1. मायां तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम् । [तन्त्रग्रन्थवचने]
2. यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम् ।
   क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ।। [गीता० 14/26]
3. मूलप्रकृतिरविकृतिर्महदाद्या: प्रकृतिविकृतय:सप्त ।
   षोडशकस्तु विकारो न प्रकृतिर्न विकृति:पुरुष: ।। [सां०का० 3]
4. संघातपरार्थत्वात् त्रिगुणादि विपर्ययादधिष्ठानात् ।
   पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ।। [सा०का० 17]
5. रंगस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।।
   पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृति: ।। [सा०का० 59]
6. तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।
   संसरति बध्यते मुच्यते च नानाश्रया प्रकृति: ।। [सा०का० 62]

मुक्तावमाने मार्कण्डेयपुराणे पुरुष:गीताया: पुरुष एव[1] सुख-दु:खेभ्यो सर्वथा विगतो भूताभिभवहीनश्च विमित: ।[2] एवमेव विकारे प्रति संहृते: अव्यक्तश्च स्वात्मन्यवस्थिते सति प्रकृतिपुरुषौ साम्यावस्थापन्नौ समानधर्माणौ भवत:।[3] परमेश्वर:प्रकृतिपुरुषयो: समाविश्य क्षोभं बोलात् सृष्टिं पयोजयति ।[4]

प्रकृति:विक्रयामासात् चतुर्विंशति तत्त्वानुरूपं प्रसरति। ततस्ता: प्रकृतिविकृतय इति सिद्धान्तरूपेण सांख्यदर्शनप्रतिपाद्यो विषय:। मार्कण्डेयपुराणम् प्रकृते:विक्रियार्थं कारणत्वेन ब्रह्माणमेव स्वीकरोति । स एव क्षोभक: क्षोभ्यश्च प्रकृते:पतित्वमावहति ।[5]

---

1. अच्छेद्यो यमदाह्यो यमक्लेद्यो शोष्य एव च ।
नित्य: सर्वगत:स्थाणुरचलो यं सनातन: ।।गीता02/24

2. सो हं न दु:खी न सुखी यतो हं प्रकृते पर:।
यो भूताभिभवो भूते:सुखदु:खात्मको हि स:।।मा0पु035/5

3. स्वात्मन्यवस्थिते व्यक्ते विकारे प्रतिसंहृते ।
प्रकृति:पुरुषश्चैव साधर्म्येणावतिष्ठत: ।। [मा0पु043/4]

4. प्रधाने क्षोभ्यमाणे तु स देवो ब्रह्म संज्ञित: ।
समुत्पन्नो ण्डकोशस्थो यथा ते कथितं मया ।।
स एव क्षोभक: पूर्वं स क्षोभ्य: प्रकृते पति: ।
स संकोचविकाशाभ्यां प्रधानत्वे पि संस्थित:।। [मा0पु043/13-

5. रजो ब्रह्मा तमो रुद्रो विष्णु:सत्त्वं जगत्पति:।
एत एव त्रयो देवा एत एव त्रयो गुणा:।। [तत्रैव 20]

प्रकृति:किल त्रिगुणात्मिका, त्रैगुण्यं च तस्यां सर्वत्र ब्रह्म एव समुत्पादयति ।अत:प्रकृते:पतित्वेनात्र पुराणे प्रदर्शित:।[1] वैदिक-सिद्धान्तवद् ऋग्वेदीय पुरुषसूक्तोक्त: पुरुष इव मार्कण्डेयपुराण-प्रतिपादित:पुरुष:। अत: स सांख्यदर्शनप्रतिपादित पुरुषेण भिन्न: योगदर्शनप्रतिपादित ईश्वर इव महत्त्वंधत्ते ।[2] एतेन ज्ञायते यत् मार्कण्डेयपुराणकाराणां निर्गुण-निराकार-निष्क्रियपुरुषमनादृत्य विलक्षणं पुरुषं स्वीकरोति ।[3]

एवं मार्कण्डेयपुराणे पुरुषस्य स्वरूपवर्णनं मया बहुनाया-सेनासादितम् । एतद् विषये विस्तरशस्चर्चा अत्र पुराणे नास्त्यते इति सुधय एव प्रमाणम् ।

---

1. कथयाम्येष ते ब्रह्मन् ससर्ज भगवान् यथा ।
   लोक: कृच्छास्वत: कृत्स्नं जगत् स्थावर जंगमम् ।।
   [मा०पु० 44/2]
2. प्राकृतो वैकृतश्चैव कौमारो नवम: स्मृत: ।
   इत्येते वै समाख्याता नव सर्गा: प्रजापते:।।
   [तत्रैव 44/36]

97

3. प्रकृतिपुरुषयोः साधर्म्यवैधर्म्यविवेचनम्

सांख्यदर्शने न "प्रकृतिर्नविकृतिर्पुरुषः"[1] इति सिद्धान्तानुरोधेन प्रकृतिपुरुषयोःसर्वथा असाधर्म्यमेव दरीदृश्यते, परं प्रकृतिः त्रिगुणात्मिका सती विक्रियां धत्ते । पुरुषस्तु निर्गुणः निर्विकारः सन् पुष्करपलाशवन्निर्लेप एवेति सांख्यदर्शने प्रतिपादितम् । अतः अनयोःसाम्यं कथं स्यादिति चिन्त्यम् । अस्यां विचिकित्सायां सत्यां पुनरपि सांख्यदर्शने उक्तम् - "पङ्ग्वन्ध इव उभयोःसम्बन्धः"[2] इति । अतः सत्यामेतादृशी स्थितौ प्रकृति पुरुषयोःसाधर्म्यवैधर्म्यविषये सर्वपुराणमधिकृत्य सामान्येन मार्कण्डेयपुराणमधिकृत्य च विविच्यते किञ्चित् -

पुराणेषु प्रकृतिपुरुषौ बहुशःसाधर्म्य-वैधर्म्यविशिष्टौ उक्तौ । महाभारते एतौ अव्यक्तादिविशेषेण युक्तावुक्तौ । अत्र प्रकृतिपुरुषयोः क्रमःसाभिप्रायः, विकारैःप्रकृतेःप्रकृत्या च पुरुषस्यानुमानं क्रियते । उभयोरनुमानगम्यत्वादेव सांख्यमान्वीक्षिकी प्रोक्तम् । महाभारतस्य शान्तिपर्वणि 316 अध्याये सांख्यमान्वीक्षिकी नाम यथार्थम् । श्रीमद्भागवते साम्परायिकी पारमार्थिकी उक्ता ।[3]

---

1. न प्रकृतिर्न विकृतिः पुरुषः । [सा०का० 3]
2. म० भा० [12/217/7, 8, 12, 37]
3. एवमन्वीक्षमाणस्य संशयभ्रान्तिभेदनः ।
   प्रतिलोमानुलोमाभ्यां परावरदृशा परः ।। [श्री०भा०3/29/1, 11/24, 2
4. अनादि-निधनौ विद्धि सदा प्रकृतिपुरुषौ ।
   विश्वासेनाभिगम्यौ तौ नाविश्वासेन कर्हिचित् ।।
   तं च तां च महाभाग ? व्यापकौ विद्धि सर्वगौ ।
   ताभ्यां विहिनं संसारे न किञ्चिद् वस्तु विद्यते ।।
   [दे०भा०3/7/11-13]

देवीभागवते नारदप्रश्नस्योत्तरे प्रकृतिपुरुषयोः स्वरूपस्य सम्यग् विवेचनमेवं कृतमस्ति ।[1]

पुराणेषु जलपुष्कर-मशकोदुम्बर-जलमत्स्यादिसमस्तोक-युग्मांशोदाहरणेन प्रकृति-पुरुषयोः पार्थक्यं स्पष्टं प्रतीयते । प्रकृतेर्भिन्नं पुरुषं ज्ञातुमेव क्षेत्रक्षेत्रज्ञ व्यक्ताव्यक्तादिविचारः प्रस्तुतः । निष्क्रियत्वात् पुरुषः सक्रियप्रकृतेर्भिन्नो वर्णितः । महाभारते प्रकृति-पुरुषविषये वर्णनमस्ति ।[2]

मार्कण्डेयपुराणे जगद्योनिः मायातत्त्वं प्रकृतिः अचेतना प्रोक्ता । पञ्चविंशकः पुरुषस्तु कूटस्थः चिन्मयः कथितः । द्रष्टा किल शुद्धबुद्धमुक्तस्वभावो दुःखातीतश्च । दृश्यरूपा प्रकृतिः परिणामिनी दुःखसंततिनी च । स्वीयत्रिगुणवैषम्यहेतुना प्रकृतिः परिणामिनी भूत्वा चतुर्विंशतितत्त्वात्मिका अविद्यां नाम धत्ते । प्रकृतेर्वैषम्या-वस्थेयं बन्धनहेतुः । यदा च स्वीयां परिणामदशां परित्यजन्ती त्रयोविंशतिविकारान् आत्मसात्कृत्वा चतुर्विंशतिरूपा साम्यावस्था-मासादयन्ती शुद्धसत्त्वमपि भवति, तदासौ विद्याशब्दसमाख्याता जीवस्य मुक्तिहेतुतां प्रपद्यते ।

---

1. अनादिनिधनौ विद्धि सदा प्रकृतिपुरुषौ ।
   विश्वासेनाभिगम्यौ तौ नाविश्वासेन कर्हिचित् ॥
   तं च तां च महाभाग ! व्यापकौ विद्धि सर्वगौ ।
   ताभ्यां विहीनं संसारे न किञ्चिद् वस्तु विद्यते ॥
   [दे० भा० 3/7/11-13]

2. पुष्करं त्वन्यदेवात्र तथान्यदुदकं स्मृतम् ।
   न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करम् ॥
   एतेषां सहवासं च निवासं चैव नित्यशः ।
   याथातथ्येन पश्यन्ति न नित्यं प्राकृता जनाः ॥

99

प्रकृति:पुरुषश्चोभावपि स्वतन्त्ररूपौ । एतयो:सम्बन्धत एव समस्तं दृश्यरूपं जगदुत्पद्यते । पुरुषो निर्लिप्तो निर्विकारश्च । प्रकृतिस्तु परिणामिनी पराधीना विकारमयी च । अत एव प्रथम-परिणामभूतं महत्तत्त्वं बुद्धिपदवाच्यमवगन्तव्यम् । महत्तत्त्वरूपिणी बुद्धिरेव निर्लिप्तं पुरुषं बन्धनदशां प्रापयति । पुरुषस्वरूपतो नितरां भिन्ना पि[1] सा अघटितघटनापटीयस्या:प्रकृते:स्वभावत:एवाभिन्ना प्रतीयते ।[2]

किञ्च वायुपुराणे-"परश्च पुरुषोज्ञेय:प्रकृतिश्च परा स्मृता:"[3] इत्युक्तम् । सांख्ययोगयोरैक्यविचारानन्तरं मार्कण्डेयपुराणे प्रकृतिपुरुषयो:पार्थक्यस्य विशदं वर्णनं कृतमस्ति ।[4]

---

*• ये त्वन्यथैव पश्यन्ति न सम्यक् तेषु दर्शनम् ।
ते व्यक्तं निरयं घोरं प्रविशन्ति पुन:पुन: ।।
[म० भा० 12/315/16-18]

1• प्रकृति:पुरुषश्चैव साधर्म्येणावतिष्ठत: । [मा०पु०43/4]

2• स संकोचविकाशाभ्यां प्रधानत्वे पि संस्थित ।।[तत्रैव43/14]

3• वा• पु• 1/5/20

4• अव्यक्तस्तु न जानीते पुरुषो न: स्वभावत: ।
न तत: परमो स्तीति नित्यमेवाभिमन्यते ।।
[मा०पु० 14/29]

4. प्रकृतिः माया विद्या अहंकारश्च -

मार्कण्डेयपुराणे प्रकृत्याःयद्रूपं प्रतिपादितम् । तत्तु मया स्वशोधप्रबन्धे अत्रैव तृतीयप्रकरणे सर्वस्यादावेवोक्तम् ।पुनस्तस्य निरूपणं युक्तमिति कृत्वा एतत्तत्त्वं तत एव बुधैरवगन्तव्यम् । अस्मिन् प्रकरणे माया विद्यां अहंकारमुद्दिश्य विचिन्त्यते किञ्चित् ।

माया-

"विश्वं माति प्रमाति यस्यां सा माया" अथवा "विश्वं मिमिते इति माया "इति व्युत्पत्त्या माङ्•माने धातोः औणादिकेन "माछाशसिभ्यो यः"इति सूत्रेण "छ"प्रत्यये "य" प्रत्यये कृते च तती माया शब्दो निष्पद्यते ।[1] मेदिनीकोषे च पीताम्बरे असुरे शाम्बरीषु च मायाशब्दो संगच्छते ।"स्यात् माया शाम्बरी" इति निगदितम् ।[2]

वेदान्तदर्शने च माति प्रमातीति माया इति सिद्धान्तानुरोधेन "ब्रह्मसत्यं जगन्मिथ्या "एतेन श्रुतिवचनेन समग्रसृष्टिप्रयोजिका माया अनिर्वचनीयेत्युक्ता । अनिर्वचनीयत् चात्र नित्यत्वानित्यत्व बुद्धिगुम्फितमिति नैतद्रहस्यप्रकाशनस्यावसरो यत् ।

मार्कण्डेयपुराणे च देवीस्तवनप्रसङ्•गे मायायाःस्वरूपनिरूपणं योगनिद्रेति पदेनाभिहितम् ।[3] एवमेव मायायाः स्वरूपनिरूपणं

---

1. मायाकारस्तु प्रतिहारकः ।[अ०को 02/10/11]
2. माया स्याच्छाम्बरीबुद्ध्योर्मायःपीताम्बरे सुरे ।
[मे०को० 11/16/46]
3. योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते ।
आस्तीर्य शेषमभजत्कल्पान्ते भगवान् प्रभुः ।।

101

महामायेति शब्देनाप्यभिहितम् । तस्या च गुणकर्माणि निर्दिष्टानि।[1] किन्च अस्य जगत: विसृष्टौ सृष्टिरूपा,पालने स्थितिरूपा, अन्ते च सैव महाशक्ति:संहाररूपिणीति प्रतिपादिता । वस्तुतस्तु ज्ञानिनामपि चेतांसि स्वातुल्यप्रभावेण स्ववशवर्ति सम्पादयितृत्वेन महामायेति पदेन महामुनिना मार्कण्डेयेन च समर्थिता ।[2] किन्च प्रकृतिरपि सृष्टौ गुणत्रयविभावयित्रि सती समस्तप्राणीनामधिष्ठात्री महामायात्मैव सामान्यत्वं बिभर्तीति सुधय एव प्रमाणम् ।[3]

मायैव सृष्टिसंहारकतृत्वेन विष्णु:परमेश्वरं वा प्रबोधयति प्रबोधितश्च विष्णु: परमेश्वरो वा विकिनोतद् जगद्रक्षति ।[4]

---

x• तुष्टाव योगनिद्रां तामेकाग्रहृदयस्थित: ।
प्रबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ।। [मा0पु078/49-52]

1• भगवन् का हि सा देवी महामायेति यां भवान् ।
ब्रवीति कथमुत्पन्ना कर्मास्याश्च किं द्विज ।।
[मा0पु078/45]

2• ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ।। [मा0पु078/42]

3• प्रकृतिस्त्वं च सर्वस्यगुणत्रयविभाविनी ।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ।। [मा0पु078/59]

4• एवं स्तुता तदा देवी तामसी तत्र वेधसा ।
विष्णो: प्रबोधनार्थाय निहन्तुं मधुकैटभौ।। [मा0पु078/68]

मार्कण्डेयपुराणे देवीस्तवनप्रसङ्गे महादेवी माया-कान्ति-शान्ति-लक्ष्मी-मातृप्रभृति रूपेण सर्वत्रोल्लसमाना विष्णोर्माया त्वनधिगच्छति ।[1] तन्चाराधिता विष्णोर्माया भगवती निरन्तरं स्तुता सती अशुभान्यभिहन्ति,अखिलानि च शुभानि प्रयच्छतीति ज्ञेयम् ।[2]

अन्यच्च सैव माया अनन्तवीर्याशक्ति:वैष्णवी विश्वबीजं प्रसन्नायां सत्यां मुक्तिहेतुभूता निगदिता ।[3] एवं सानुदिनं देवानां याचनया तुष्टा पुष्टा सती विश्वमिदं सम्मोहयति,विज्ञानं ऋद्धिं च प्रयच्छति ,देवान् तोषयति चेति ।[4]

---

1. स्तुता सुरै: पूर्वमभीष्टसंश्रयात्तथा सुरेन्द्रेण दिनेषु सेविता।
करोतु सा न: शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापद:।।
[मा०पु०82/38]

2. या देवी सर्वभूतेषु विष्णुमायेति शब्दिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नम: ।। [मा०पु०82/12]

3. त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया।
सम्मोहितं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतु:।।
[मा०पु०84/4]

4. एवं भगवती देवी सा नित्यापि पुन:पुन: ।
सम्भूय कुरुते भूप जगत: परिपालनम् ।।

तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते ।
सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति।।
[मा०पु०89/33-34]

## अविद्यायाः स्वरूपम्

अत्रेदं तत्त्वं दर्शनेषु माया विद्ययोश्च स्वरूपनिरूपणविषये अस्ति किल महदन्तरम् । अद्वैतवादिनस्तु माया विद्ययोरलीकत्वमुपस्थाप्य निर्गुणनिष्क्रियं ब्रह्म एव परमात्मत्वेन प्रतिष्ठापयन्ति । नैयायिकाश्च ईश्वरेच्छारूपां शक्तिमंगीकृत्य माया विद्ययोश्च वादं वेदान्तिवद् न तिरस्कुर्वन्ति । सांख्ययोगाचार्याश्च माया-विद्ययोरनिशं कर्तव्यजातम् प्रकृतिद्वारैव सम्पादयन्ति । बौद्धाः जैनाश्च प्रज्ञाकरुणादि भावाभिव्यक्त्या याथातथ्येन मायावादं नांगीकृत्यापि तं न तिरस्कर्तुं शक्यते । पौराणिकाश्च सर्वदर्शन-सामञ्जस्यं विधाय यथा यत् प्रदर्शितम् तदेवांगीकृत्य माया विद्योश्चस्वरूपं समुपस्थापयन्ति । साधनैकधनाः वैष्णवाः शैवाः शाक्ताश्च प्रकृतिं माया विद्यान्च स्व-स्व सिद्धान्तानुरोधेन क्वचिल्लक्ष्मीरूपेण, क्वचिद्शक्तिरूपेण, क्वचिद् च देवीस्वरूपेण तत्तत्त्वं निष्पाद्य प्रकृति माया अविद्यादीनां मन्त्रभावः तेषु-तेषु स्वरूपेष्वोपस्थापयन्ति । अतः शैव शाक्तदर्शनयोः षट्त्रिंशत् तत्त्वेषु माया विद्ययोरनाम स्व-स्व महत् महिम्ना परिमण्डय महत्त्वोत्कर्षेण माया विद्ययोश्च तदनुप्रकृतिश्च विवेचनमस्माकं पुरतः समुपहरन्ति ।[1] अतः त्रिसृणां प्रकृति-माया विद्यानाञ्च शक्तीनां क्रमशो व्यवस्थापनं आधीयायाश्चित्तकायाः स्वरूपमुपबृंहणे प्रकाशितमिति ।

---

1. विद्याः समस्तास्तव देवि भेदाः ।
स्त्रियः समस्ताः सकलं जगच्च ।
त्वयैकया पूरितमम्बयैतत्
का ते स्तुतिः स्तव्यपरा परोक्तिः ।। [मा०पु०88/5]

## प्रकृतिपुरुषयोः कार्याणि

साङ्ख्यदर्शनं हि भारतीयदर्शनपरम्परायामत्यन्तं प्राचीनं प्रभावोत्पादकं च दर्शनमस्ति । महर्षिणा कपिलेन प्रणीतं दर्शनं कापिलमित्युच्यते । एतदेव दर्शनमन्वर्थतया सांख्यमिति संगीयते । तथाहि - सम्यक्ख्यानं संख्या साऽस्ति अस्मिन्निति सांख्यं तत्त्वज्ञानविधानसमर्थं दर्शनमित्यर्थः । यद्वा साङ्ख्या पदार्थानां गणना तत्प्रधानं दर्शनं साङ्ख्यम् । भवति चात्र व्यक्ताव्यक्तज्ञसंज्ञानां महदहंकारैकादशेन्द्रियपञ्चतन्मात्रपञ्चमहाभूतेति त्रयोविंशतेर्व्यक्तानां एकस्याः अव्यक्तायाः प्रकृतेरेकस्य ज्ञस्य पुरुषस्य चेति पञ्चविंशतितत्त्वानां निखिलदर्शनान्तरापेक्षयाऽधिकानां गणना प्राधान्येन ।

दर्शनेऽस्मिन् सत्त्वरजस्तमसां साम्यावस्थास्वरूपायाः प्रकृतेरेव सकलप्रपञ्चकर्तृत्वम् । पुरुषस्य तु पुष्करपलाशवन्निर्लेपस्यापि चेतनत्वेन जडायां प्रकृतौ चैतन्याभिमानसम्पादकत्वम् । अचेतनानां भोग्यानां भोक्तृत्वञ्चेति द्वयमेव कृत्यम् । जगत आरम्भस्तु प्रकृतेरेव भवति । तथा चोक्तं सांख्यकारिकायाम् -

तस्मात् सांख्यनये प्रकृत्यैव जगदुत्पत्तौ सिद्धायामीश्वरोनावश्यकः । आध्यात्मिकाधिदैविकाधिभौतिकदुःखत्रयात्यन्तिकनिवृत्तिरेवापवर्गः । स च व्यक्ताव्यक्तज्ञविज्ञानात् सत्पुरुषान्यताख्यातिरूपाः परिणमते । सति चापवर्गे सत्स्वरूपविनिवृत्तिः पर्यवस्यति । अचेतनायाः प्रकृतेः प्रवृत्तिश्च वत्सविवृद्धये अज्ञस्य क्षीरस्य प्रवृत्तेर्दृष्टान्तेन

---

1. प्रकृतेर्महान् ततोऽहंकारः तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ॥
[सां०का०-3]

समर्थिता ।

सांख्यदर्शनं हि सा विच्छित्तिः इत्यतः यथा तथा इत्यन्तं षडध्यायात्मकम् । तत्र प्रथमाध्याये विषया निरूपिताः द्वितीये प्रकृतेःकार्याणि, तृतीये विषयेभ्यो वैराग्यम्, चतुर्थे विरक्तानां पिंगलाकुरवादीनामाख्यायिका, पञ्चमे परपक्षनिर्णयः, षष्ठे सर्वार्थसंक्षेपः । प्रकृतिपुरुषविवेकज्ञानेन त्रिविधदुःखात्यन्तनिवृत्तिरेव सांख्यशास्त्रस्य प्रयोजनम् ।

सांख्यैः सर्वस्यैव वस्तुनः त्रिगुणात्मकत्वेन सुखदुःखमोहात्मकतया संघातत्वेन अव्यक्तादयः प्रकृत्यतिरिक्तचेतनार्थाः संघातत्वात् शय्यासनादिवत्, शब्दादि किञ्चित्करणे धिष्ठीयमानं सुखाद्यात्मकत्वाद्रथादिवत् । इत्यादिभिः अनुमानेभ्यः प्रकृत्यादिचतुर्विंशतिव्यतिरिक्तःपुरुषोऽस्ति, स च प्रतिशरीरं भिन्नोऽन्यथा पुरुषैकत्वे जन्ममरणसुखदुःखबन्धमोक्षव्यवस्था न सिद्ध्येत् । तथाहि-पुरुषस्यैकत्वे एकस्मिन् जायमाने सर्वे जायेरन्, एकस्मिन् म्रियमाणे सर्वे म्रियेरन्, एकस्मिन् सुखिनि सर्वे पि सुखिनः स्युः, एकस्मिन् दुखिनि सर्वे पि दुखिनः स्युः, एकस्मिन् बद्धे सर्वे बध्येरन्, एकस्मिन् मुक्ते सर्वे पि मुच्येरन् । तस्मात् प्रतिशरीरं पुरुषो भिन्नः । अत एव सांख्यदर्शननये पुरुषबहुत्वं सिध्यति ।

कालविशेषे क्षोभितायाः प्रकृतेःप्रथमःपरिणामो महत्तत्त्वम् । एतदेव सत्त्वबुद्ध्यादिशब्दवेद्यं स्वाविवेकाद् वस्तुतो भोक्तृत्वादिविधुरं पुमांसं भोक्तृत्वादिभिः धर्मैः बध्नाति । परमार्थतः

106

कर्तृत्वाद्यसंस्पृष्टस्य तस्य बुद्धौ चैतन्याभिमानान्यथानुपपत्त्या कल्पितस्य कूटस्थनित्यस्य अन्तःकरणान्यतया योगोपदिष्ट-दिशा साक्षात्कृतस्य स्वरूपावस्थानं मोक्षः। सांख्यदर्शनाद् योगदर्शने अन्यतत्त्वातिरिक्तस्यैकस्य परमेश्वरस्यास्तित्व-स्वीकारो विशेषः।



108

चतुर्थो ऽध्याय:

सांख्ययोगतत्त्वविमर्श:

तत्त्वसंख्याविमर्श:

पुराणेषु सांख्यविवेचनस्याधारस्तत्त्वसमासो ऽस्ति । तत्र तत्त्वानि षोडशाष्टकरूपेण विभक्तानि सन्ति । अष्टप्रकृतय: षोडशविकाराश्च अचेतनादिनामभिर्व्यपदिष्टा:सन्ति ।एभ्यो ऽतिरिक्तं पञ्चविंशतिकं तत्त्वं पुरुष उच्यते । तथा च प्रकृति:,महान् अहंकार:,एकादशेन्द्रियाणि,पञ्चतन्मात्रा:,पञ्चमहाभूतानि पुरुषश्चेति पञ्चविंशतितत्त्वानि सांख्यदर्शने प्रसिद्धानि सन्ति । तथा चोक्तं महाभारते-पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिण:। 23 तत्त्वानि प्रकृतेर्गुणत्वेन स्वीक्रियन्ते । एवञ्च प्रकृति-गुण-पुरुषाणां गणना ऽपि पुराणेतिहासयो:दृष्टिगोचरीभवति । महाभारते षोडशाष्टकरूपेण गणना कृता ऽस्ति ।[1]

देवीभागवते पुरुषातिरिक्तानि 24 तत्त्वानि अचेतनरूपेणोपस्थापितानि सन्ति ।[2]

मार्कण्डेयपुराणे -तत्त्वसंख्याया:विवरणं प्राप्यते ।[3]

श्रीमद्भागवते तत्त्वसंख्यायां कपिलेन त्रयोविंशतितत्त्वानां गणो ऽभिव्यञ्जित:[4] ।

---

1• एता:प्रकृतयश्चाष्टौ विकारांश्चापि षोडश ।
पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च ।। [12/36/15]

2• चतुर्विंशातिरिक्तो ऽस्मि किं मे दु:खं सुखं च किम्"
सप्तैकषोडशादिभ्यो विभिन्नो ऽहं सदा सुखी ।। [दे0भा05/4

तथा च एषु विभाजनेषु यत्र चेतनाचेतनयोराधारः स्वीकृतः तत्र 24+1=25 xxxxxxxx रूपेण पञ्चविंशति तत्त्वानि विभक्तानि। यत्र प्रकृतिविकृत्योराधारस्तत्र षोडशाष्ट सप्तैकाष्ट-त्रयोविंशत्येक-16+8=24, 16+7+1=24, 23+1=24 रूपेण विभाजनमुपलभ्यते। श्रीमद्भागवते मनोवैज्ञानिकदृष्ट्या दशैकपञ्चाष्ट-पञ्चपञ्चचतुर्दश 10+1+5+8=24, 5+5+4+10=24 रूपेणविभागःकृतो विद्यते।

मार्कण्डेय पुराणे महाभारते च यत्र तत्र तत्त्वसंख्यायाः संकेतः 23/24/25/26 रूपेणोपलभ्यते। अत एवाधुनिकेषु विद्वत्सु अनेकविधो विवाद उपतिष्ठते।

पुराणेतिहासयोः अन्तःसाक्ष्ये अन्यप्रकारा गणना अपि उपलभ्यते। महाभारते [13/111/29] आत्मा अष्टमं तत्त्वं स्वीकृतम्। [12/252/10] पञ्चभूत-ज्ञान-भावना-कर्म-मनोबुद्धिभिरात्मा एकादश तत्त्वरूपे वर्णितो स्ति। एकादशस्त्वात्मा सर्वदा पर उच्यते।

---

१. अव्यक्तादिविशेषान्तमविकारमचेतनम्
व्यक्ताव्यक्तं त्वया ज्ञेयं ज्ञाता क्षत्राहमित्युत॥
[मा०पु०26/25]

२. त्रयोविंशतितत्त्वानां गणं युगपदाविशत्।
[3/6/2]

1. जगृहे पौरुषं रूपं भगवान् महदादिभिः।
संभूतं षोडशकलमादौ लोकसिसृक्षया॥
[श्री०भा०1/3/1]

द्वारा आत्मा सप्तदशं तत्त्वं प्रतिपादितो ऽस्ति । ब्रह्मपुराणे महाभारते च एवमुक्तमस्ति -

पञ्चविंशो महानात्मा तस्यैव प्रतिबोधनात् ।

लिङ्गपुराणे उत्तरखण्डे दशमाध्याये च पुरुष:प्रकृतिमहद-हंकार -एकादशेन्द्रिय-पञ्चतन्मात्रै: सह विंशं तत्त्वं स्वीकृतम् । एवमनेकप्रकारकस्य तत्त्वप्रसंख्यानस्य संकेता विभिन्नेषु पुराणेषूपलभ्यन्ते ।

## 2. प्रकृतिपुरुष विवेक:

पुराणेषु सांख्यीयपदार्थानां चेतनाचेतनभेदेन द्विधा विभाग: कृतो ऽस्ति । प्रकृतिपुरुषौ तयोर्विभागयो:प्रातिनिध्यं कुरुत:। सांख्यतत्त्वार्थे ध्याने दीयमाने द्विविधं तत्त्वमुपलभ्यते - एकं तत्त्वमचेतनं सगुणं सक्रियं सविकारञ्च, द्वितीयं तद्विपरीतं चेतनं निर्गुणं निर्विकारं निष्क्रियञ्च । तत्र प्रथमो चेतनवर्ग: प्राकृतवर्गो वाभिमत:।अस्य वर्गस्य मूलं प्रकृतिरस्ति । द्वितीय: पुरुषो ऽस्ति, य: आदि: अव्यय:,अनन्त, जन्मादिव्यतिरिक्तञ्च कथित:। अत एव तन्मूलस्य प्रश्न एव नोदेति । एवं प्रकृति: पुरुषश्चेति द्वे एव तत्त्वे सांख्ये मुख्ये स्त:। मार्कण्डेयपुराणे प्रकृति: प्रलयपदेन व्यपदिश्यते- प्रलयं प्रकृतिं प्राप्य युगादौ सृजते पुन: । प्रलीयन्ते ऽस्मिन् महदादिकार्याणीति प्रलय:,तथा प्रकरोति उत्पत्तिलयस्थानमिति प्रकृति:।[2]

---

1. म० पु० 46/25

2. एवोवाभिसम्बद्धौ नित्यं प्रकृतिपुरुषौ ।
पश्यामि भार्गवस्तस्मान् मोक्षधर्मो न विद्यते ।।
[श्री०भा० 3/27/17]

अत्र जनक आशङ्कते यदि प्रकृतिपुरुषौ अन्यो न्याश्रयौ नित्यौ स्तः, तर्हि प्रकृतिःपुरुषं कथङ्कारं मोचयति ।

श्रीमद्भागवते उद्धवेन एवं विधः प्रश्न उपस्थापितः । उद्धवस्य प्रश्नोत्तरे भगवान् श्रीकृष्णः पूर्वविंगणविनिश्चितत्वांख्यस्य सम्यग् निर्देशेन बोधयितुमुपक्रमते । यद् ज्ञात्वा मनुष्यः सद्य एव वैकल्पिकं भ्रमं परित्यजति । उपर्युक्तरीत्या पदार्थविभाजनपूर्वकमुक्तम् । तत्र कपिलमुनिः पुरुषं जगत्कर्तारं प्रकृतिञ्च जगत्कर्त्रीं मन्यते । सांख्य प्रकृति प्रयोजनवतीं स्वीकरोति । पुरुषस्य भोगो पवर्गौ चास्याःप्रयोजनम् । एतदेव प्रयोजनं साधयितुं क्रमशः महदादिक्रमेण भूतपर्यन्तमस्या विकाशो भवति, नहि क्रमशः । पूर्वं सूक्ष्मःपरिणामो भवति । अथ क्रमशो यं विकासः स्थूलतामुपगच्छति । पुरुषःनिर्देशेन गमनादस्या विकाशक्रमे व्यवस्थायै न कश्चिदस्ति अवसरः ।

एवं प्रकृतिपुरुषावुभौ परस्परावलम्बितौ स्तः । पुरुषो-ऽधिष्ठाता प्रकृतिश्च अधिष्ठानयुक्ता । पुरुषस्याधिष्ठातृत्वे पि स उदासीनः असंगश्चास्ति । अत एव स उपेक्षक उच्यते । उपसमीपे स्थित्वा ईक्षते इत्युपेक्षकः । पुरुषाधिष्ठातृत्वे एव सर्वे प्राकृतिका विकारा भवन्ति । वस्तुतश्चेतनस्य स्वेच्छाया सम्पर्कत्वमेवाधि-ष्ठातृत्वमस्ति । पुरुषस्य प्रयोजकत्वमथाधिष्ठातृत्वपदेन न विवक्षितम् । स अधिष्ठाता सन्नपि उदासीनो संगश्चास्ति । अतः तस्योदासीनत्वं सर्वदा अक्षुण्णमस्ति ।

मार्कण्डेयपुराणे प्रकृतिःप्रयोजनवर्ती उक्ता । सा जगद् विकासं कुर्वन्ती अक्षया स्ति । तस्या आनन्त्यस्य कदाप्यक्षयो न भवति । तत्रानेकसंसारस्य विकासयोग्यता विद्यते । एवं पुरुषाधिष्ठितेव समस्तं चराचरं जगद् आविर्भावयति । श्रीनीलकण्ठप्रभृतिभिः पुरुषाधिष्ठितत्वाद् प्रकृतिःपरतन्त्रा मन्यते ।एस० रायो पि एवं निष्कर्षं निःसारयति ।[1] किन्तु नेवं वास्तविकता स्ति यत् प्रकृतिः पुरुषप्रयोजनसाधनाद् तदधिष्ठानाच्च परतन्त्रा नास्ति। सर्वपदार्थलयस्थानत्वाद् प्रकृतिः अलिङ्गमुच्यते । अलिङ्गत्वादेव प्रकृतिःस्वतन्त्रास्ति । प्रकृतिःतस्यामेवावस्थायां पारतन्त्र्यमनुभवितुमर्हति यदा सा अन्यस्माद् कारणाद् विकसिता । सती प्रलये तत्रैव लीयते । सांख्यनये व्यक्ता एव पदार्था सावयवाःपरतन्त्राश्चोच्यन्ते । लयशीलं तत्त्वं लिङ्गमुच्यते । अत एव प्रकृति उत्पत्तिस्थितिलयस्थानमुक्ता ।

वैदिकवाङ्मये सांख्यस्य द्वित्ववादसंकेतः अनेकेषु स्थलेषु उपलभ्यते । ऋग्वेदे "द्वा सुपर्णा संयुजा सखाया समाने वृक्षे परिषस्वजाते" इत्यत्र प्रकृतिपुरुषयोःपार्थक्यं द्रष्टुं शक्यते । विद्वद्भिरेवं द्विविधः संकेतः कृतः।[2]

पुरुषो द्रष्टा साक्षी अकर्त्ता उदासीनः पुण्यपापाभ्यामलिप्तो स्ति । वैकल्पिकअवस्थायां पुरुषः प्रकृतिगतं कर्मादि आत्मीयं

---

1• इण्डियन फिलासफी, पृ० 172

2• ओरिजन एण्ड डेवलपमेण्ट आफ सांख्य सिस्टम आफ थाट,- पृ०- 9-10

113

मन्यते । कीथ-[1] विण्टरनित्स प्रभृतय: पाश्चात्या विद्वांसो पि एतत् स्वीकुर्वन्ति यद् द्वा सुपर्णावित्यत्र सांख्यस्य द्वित्ववाद: स्पष्टो स्ति । विण्टरनित्स: काष्टजलु अपांक्ते पुरुषातिरिक्तं प्रकृतितत्त्वं स्वीकरोति । महाभारते प्रकृतिपुरुषौ अन्यो न्याश्रयौ व्याप्यमिश्रीभावात्मकौ युक्तौ स्त:। प्रकृते: पुरुषस्य च ज्ञाता सर्व-बन्धनैर्मुच्यते । य: तत्त्ववेत्ता रहसि परमात्मानं ध्यायति स सर्वासक्तिरहित: परमात्मानं प्राप्नोति । प्रकृतिपुरुषयो:स्वरूपं ज्ञात्वा पुरुष: सर्वेभ्य: पापेभ्य: विमुच्यते । प्रकृतिपुरुषयो:अधि-ष्ठातृत्वस्य अधिष्ठानीत्वस्य च विचारे क्रियमाणे स्पष्टं प्रतीयते यत् प्रकृते:विकारैरेव पुरुषो नुमीयते ।

एकस्मिन्नेव शरीरे प्रतीन्द्रियम् अधिभूताध्यात्माधिदैव-रूपेण त्रयो भेदा: कल्पिता:सन्ति । तथा चक्षुषि गोलकम् अधिभूतम्, इन्द्रियमध्यात्मम्, सूर्यो धिदैव:। इमे त्रयो पि भेदा: परस्परं सापेक्षा:सन्ति । एषु कस्याप्येकस्याभावे रूपज्ञानं भवितुं नार्हति, परन्तु आकाशे स्थितं सूर्यमण्डलमेभ्य:त्रिभ्यो भेदेभ्य: पृथगेवास्ति। तमेषामाधारभूतस्यात्मन उपलब्धिस्तु अहङ्•कारनिवृत्त्या भवति । अहङ्•कारनिवृत्तिश्च तदा भवति तदा त्रिविधो यं विकल्पो लीयते। विकल्पो हि आत्मनो ज्ञानवशेन भासते । आत्मज्ञाने जाते विकल्प: स्वयमेव निवृत्तो भवति । श्रीमद्भागवते 3 स्कन्धे 27 अध्याये देवहूति: भगवन्तं कपिलं प्रपच्छ यद् तत्र[2] मुक्तये प्रकृतिपुरुषयो: परस्परापेक्षितत्त्यागो न सम्भवति । यत: पुरुषं विना प्रकृति:

---

1• सांख्यसिस्टम्, पृ० 10

2• हिस्ट्री आफ संस्कृत लिटरेचर, पृ० -133-137

प्रकृतिं विना पुरुषस्य च सत्ता न स्थातुं शक्नोति ।

यथा पृथिवीतो गन्धः, जलाद् रसः, अग्नेदाहकता च पृथग् न स्थातुमर्हति, तथैव प्रकृतेःपुरुषः पुरुषाच्च प्रकृतिः पृथक् स्थातुं नार्हतः ।

इत्येवं प्रश्ने उत्तरयति भगवान् कपिल-मातः १ निष्कामकर्माचरणेन मानवस्य मनो निर्मलं जायते । निरन्तरं भगवत्कथाश्रवणाज्जायमानया तीव्रभक्त्या भगवति एवं मनो रमते येन सांसारिकं किमपि वस्तु नेच्छति तत् । सर्वत्रैव वैराग्यं वर्धते, न पुनः प्रकृतिः समाक्रष्टुं शक्नोति ।

## ३· महान् मनो बुद्धिः अहंकारश्च

### महान्

पुरुषस्य सम्पर्केण साम्यावस्थातः प्रच्युतायाः प्रकृतेः प्रथमविकाररूपेण महत् तत्त्वस्याविर्भावो भवति । महानेव बुद्धितत्त्वमुच्यते । यथा बीजे महतो वृक्षस्योत्पादनयोग्यतायां सत्यामपि अङ्कुरादिक्रमेण एव वृक्षस्य विकासो भवति, तथैव महान् प्रकृतेः अङ्कुरक्रमेण विकसितो भवति ।

महाभारते आश्वमेधिकपर्वणो अनुगीतायामपि प्रोक्तं यद् अव्यक्तायाः प्रकृतेः आत्मस्वरूपं महत्तत्त्वमुत्पद्यते । इदमेव सर्वगुणानामादितत्त्वं प्रथमः सर्ग उच्यते ।

---

१· एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ।
युञ्जतो नापकुरुत आत्मारामस्य कर्हिचित् ॥
(श्री०भा० ३/२७/२६)

आत्मा, मतिः, विष्णुः, जिष्णुः, शम्भुः, वीर्यवान्, बुद्धिः, प्रज्ञा, उपलब्धिः, ख्यातिः, धृतिः, स्मृतिः, इतीमानि 12 महतो नामानि प्रोक्तानि । एभिः पर्यायवाचकैः शब्दैः महान् आत्मा विभाव्यते । महान्तं जानन् विद्वान् कदापि मोहं नाधिगच्छति। यो बुद्धिरूपायां गुहायां स्थितं विश्वरूपं पुराणं पुरुषं ज्ञानिनामुत्कृष्टगतिं परमं प्रभुं सम्यग् जानाति स बुद्धिमान् बुद्धेःसीमानमतिक्रामति ।

<u>मनोबुद्धिः</u>

सांख्यदर्शनसिद्धान्ते पुरुषस्य सम्पर्केण साम्यावस्थातः प्रच्युतायाः प्रकृतेः प्रथमविकाररूपेण महानुत्पद्यते । अयमेव सर्वव्यापाराधिष्ठात्री बुद्धिरुच्यते । सूक्ष्मायाः प्रकृतेःसूक्ष्मतमो विकासो न भवति । इदमेव स्पष्टयितुं पुराणेतिहासयो प्रकृतेरुपमा बीजेन दत्तास्ति । यथा वटबीजे महतो वृक्षस्योत्पादनयोग्यतायां सत्यामपि अङ्कुरनालशाखादिक्रमेण विकासो भवति, तथैव महानपि प्रकृतेरङ्कुररूपेण विकसितो भवति ।

पञ्चवायवो वागादीनीन्द्रियाणि मनोबुद्धौ वेतानि भिन्नरूपेण वर्णितानि । यत्राहङ्कारस्य चर्चा नास्ति तत्र स बुद्धावन्तर्हितो मन्तव्यः। लोकमान्यतिलकेनापि पुराणेतिहासयोराधारेण

---

1. एवं हि यो वेद गुहाशयं प्रभुं परं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीवतिष्ठति
[40/13]

इदमेव साधयति । अथवा स्वविवेचनप्रसङ्गे हङ्कार: प्राय: अनुल्लिखितो ऽस्ति, बुद्धिमनसोरेव प्रयोग: सर्वत्र दृष्टिगोचरो भवति - "व्यवसायात्मिका बुद्धि: मनो व्याकरणात्मकम्" पुराणेतिहासयोरेकमभ्यस्तमिदं कथनमस्ति[1] । बुद्धे: विस्तृतं वर्णनं सर्वत्र मनोभौतिकजगतो योनिरूपेण वर्तते ।

मार्कण्डेयपुराणे बुद्धिरेव सर्वेन्द्रियाणां श्रेष्ठा अभिमता । नारदपुराणे "यदा प्रार्थयते किन्चित् तदा भवति तन्मन:"[2] अनेनापि उपर्युक्तस्य तथ्यस्य प्रतिपादनं भवति ।

वायौ बुद्धिरपेक्षा कृतान् अधिकान् पर्यायान् उपस्थाय व्याख्यानं कृतमस्ति । महाभारते बुद्धेरधिदैविकं रूपमपि । आध्यात्मिकदृष्ट्या एतत्सर्वं रूपमुपस्थापितमस्ति । अत्र महत् -मन:-ब्रह्म-मति-बुद्धि-ख्याति-महात्म-ईश्वर-प्रज्ञान-भव-पुरुष-स्वयम्भुवो बुद्धे: पर्याया वर्णिता:सन्ति ।[3]

---

1· बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनायिका ।
   यदा विकुरुते भावं तदा भवति सा मन: ।। [मा०पु०23/67]

2· ना० पु० 44/4।

3· महांस्तु सृष्टिं कुरुते चोद्यमान: सिसृक्षया ।
   मनो महान् मतिर्ब्रह्मा भूर्बुद्धिः ख्यातिरीश्वर: ।।
   प्रज्ञाचिति:स्मृति: संविद् विपुरं चोच्यते बुधै: । [वा·पु· 1/3/28-28]
   बृहत्त्वाच्च स्मृतो ब्रह्मा भूतत्वाद् भव उच्यते ।
   क्षेत्रक्षेत्रज्ञविज्ञानादेकत्वाच्च स क: स्मृत: ।।
   यस्मात् पुर्यनुशेते च तस्मात् पुरुष उच्यते ।। [वा०पु· 1/43-44]

बुद्धे पर्यायरूपेण प्रयुक्तः पुरुषः पुरि शेते इति व्युत्पत्त्या सिध्यति । अयं निर्गुणनिष्क्रिय-निष्कल-निरञ्जनत्वात् पुरुषाद्भिन्नो-स्ति ।

स्मृतिः धृतिश्च बाधौ, ब्राह्मे, भारते च बुद्धिपर्यायरूपेण स्वीकृते स्तः। देवीभागवते मनोबुद्धीन्द्रियाणां वर्णनमस्ति।[1] बुद्धिर्विवेचनात्मिका तथा ज्ञानस्य बीजमुक्ता । एवं गीतादेवीभागवतानुसारं बुद्धिमहत्त्वशब्दाः सन्ति एकार्थकाः। जगदुपादानत्वाधिकृत्य बुद्धिर्महान् प्रोक्तः। विषयाणां प्रत्यक्ष हेतुत्वादस्या नामास्ति बुद्धिः। वस्तुतो बुद्धिमहतोः पूर्वोक्तानां सर्वेषां पर्यायाणामन्तर्भावो भवितुमर्हति । जगदुपादानत्वात् महत्-शम्भु-विष्णु प्रभृतीनां एकार्थकत्वमेवंभूतानां सर्वेषां पर्यायाणाम् महति पर्यवसानं कर्तुं शक्यते । एवं स्मृति प्रज्ञादीनां विषयप्रत्यक्षकरणभूतबुद्धावन्तर्भावो विधातुं शक्यते ।

कूर्मपुराणस्य पूर्वार्धे प्रधानपुरुषात्मकमहद्बीजरूपेण बुद्धिर्जगद्योनिरस्ति । अत्रापि बुद्धेरनेकपर्यायाणां चर्चा ऽस्ति । एते सर्वेऽपि वायुप्रोक्तपर्यायेषु समागताः सन्ति ।[2]

-------------------------------

1. दे० भा० - (3/3/26-36)

2. महानात्मा मतिर्ब्रह्मा प्रबुद्धिः ख्यातिरीश्वरः ।
प्रज्ञा धृतिः स्मृतिः संविदेतस्मादिति तत्स्मृतम् ॥
(कू० पु० 4/17)

मार्कण्डेयपुराणे प्रकृतेरुत्पन्नं महत्तत्वं पथामुक्तम् । इदं हिरण्मयं प्रोक्तम् । अस्यैव नाम वासुदेवः इति । अस्मिन् विकारमापन्ने त्रिविधाहङ्कारस्य विकासो भवति । इतो बुद्धितत्त्वस्य विकासः कथितः । एवमत्र बुद्धिः महांश्च भिन्नौ स्तः । मार्कण्डेयपुराणे एवमेव वर्णनमस्ति ।[1]

एवमत्रापि वायु-ब्रह्माण्ड-भारतानुरूपमेव बुद्धिलक्षणं कृतमस्ति, किन्तु तदाहङ्कारिकं स्वीकृतमस्ति । यथा बुद्धि सर्वेन्द्रिययोनि मत्वा सर्वेन्द्रियस्वरूपं स्वीकृतं तथैव महाभारते तथा नारदीये पुराणे सर्वेन्द्रिय प्रतिनिधिः स्वीकृतः । कर्मण आधारेण इन्द्रियाणां द्विधा विभागो विहितोऽस्ति । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च । तत्र श्रोत्र-चक्षुः-घ्राण-नासिका-त्वचो ज्ञानेन्द्रियाणि । वाक्-पाद-पाणि-पायूपस्थानि कर्मेन्द्रियाणि । मनश्चैकमुभयात्मकं स्वीक्रियते, परन्तु महाभारते पाञ्चशिखे वृत्तान्ते कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि प्रोक्तानि । बलं षष्ठं कर्मेन्द्रियं मनश्चाष्टमं ज्ञानेन्द्रियं प्रोक्तम् । सुलभाजनक संवादे ऽपि बलं क्षेत्रस्यैको घटकः स्वीकृतोऽस्ति ।

अतो बलमिन्द्रियरूपं मत्वा पञ्चशिखेन समुचितमेव कृतम् । गीतायां मनःप्राणेन्द्रियमिति प्रयोगः ।[2] मार्कण्डेयपुराणे "बुद्धीन्द्रिय-मनःप्राणान् इति कथितमस्ति ।[3] एतेन इन्द्रियैः सह प्राणस्याभेदः

---

1. संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ।
   स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ।। [मा०पु०67/20]
2. गीता०-18/23
3. मा०पु०-5/48

सम्बन्धो स्ति । माठरवृत्तौ प्राणा पिञ्जरम् इन्द्रियाणि च शुका: प्रोक्ता :। देवीभागवते वर्णितयम-सावित्रीसंवादे प्राणा वायुभेदा:, बलं च रूपं प्रोक्तम् ।[1] एवं बलप्राणौ एकार्थौ लक्ष्यत:। पञ्चशिखविवेचने पि बलस्य प्रयोग:अस्मिन्नेव रूपे ज्ञेय:। योगे प्राणानां निरोध: इन्द्रियनिरोधस्य प्रथमं सोपानं मन्यते । एतन्निरोधे इन्द्रियाणि दुर्बलानि भवन्ति । एतेन प्राणो बलार्थे एवास्ति । अत: प्राणा:पृथक् सन्ति, न ते इन्द्रियाणि भवितुमर्हन्ति, किन्तु इन्द्रियाणां बलप्राणयोराहारवाचकत्वं स्वीकर्तव्यम् ।

## अहङ्कार:

पुराणेतिहासयो:सर्वत्राहङ्कार: त्रिविध:प्रोक्त: ।कूर्मपुराणे अहङ्कारस्य एवमेव निरूपणम् कृतमस्ति । महाभारतस्याश्वमेधिकपर्वणि अनुगीतायां प्रोक्तं यत् यत्तत्त्वं महत्तत्त्वादुत्पद्यते तदेवाहङ्कार:द्वितीय:सर्ग:प्रोच्यते । अहङ्कारो हि भूतादिविकाराणां कारणमस्ति ।अतो यं वैकारिक:कथ्यते । रजोगुणस्वरूपत्वादयं तैजसो स्ति । सर्वासां प्रजानां प्रादुर्भाव इति एव भवतीत्येवं तेनायं प्रजापति:प्रोच्यते । अयं श्रोत्रादीन्द्रियदेवानां मनसश्चोत्पादकत्वाद्देवरूपत्वाच्च देव: त्रिलोककृच्च कथ्यते । सम्पूर्णं जगदहङ्कारस्वरूपमस्ति। अतो यमभिमन्ता निगद्यते । सर्वोत्पादके नाहङ्कारेण जीवात्मा सर्वगुणान् विरचयति उपभुङ्क्ते च । इदं दृश्यमानं चेष्टाशीलं जगदहङ्कारस्यैव स्वरूपमस्ति ।अहङ्कार एव स्वतेजसा समस्तं विश्वं रञ्जयन्

---

1· दे0भा0 9/18

महाभारते भूतादि:, भूतभृत्, वैकारिकश्च दृश्यमानस्य जगत: प्रत्यक्षकर्ता अहङ्कार: प्रोक्तो ऽस्ति । एवमत्रापि कूर्मवत् त्रिविधो अहङ्कार:प्रोक्त:।[1]

मार्कण्डेयपुराणे त्रिविधाहङ्कारस्य विवेचनमस्ति । कौर्मे अहङ्कारोपादानत्वस्य विवेचनमेवास्ति । भूतेन्द्रियोपादनत्वाद् अहङ्कारस्य विस्तृतं विवेचनमनिवार्यतया अपेक्षितमस्ति । प्रकृतेर्विकासे मनोभौतिकसत्ताया: पार्थक्यप्रदानत्वाद् अहङ्कार:पुराणेतिहासयो: ब्रह्मादिरपि कथित:। सत्त्वसमुद्रेके समुत्पन्नत्वाद् बुद्धि:सात्त्विकी कथ्यते । अत एवेयं महानपि प्रोच्यते । स तु पुराणेषु त्रिगुणो विज्ञेय:।[2]

महान् त्रिविध:प्रोक्त:। वायुपुराणे [1/4/49] लिङ्गपुराणे [2/17] पद्मपुराणे [1/2/90] मार्कण्डेयपुराणे विष्णुपुराणे च सर्व: प्रकार: स्वल्पतया प्रोक्त:।[3]

त्रिविधाया: प्रकृत:विकासत्वात् सर्वाणि तत्त्वानि त्रिविधानि कथयितुं शक्यन्ते । महान् अस्यापवादो भवितुं नार्हति । यथा अहङ्कार: त्रिगुण:सन्नैव सात्त्विकराजसतामसानामुत्पादने समर्थो ऽस्ति । तथैव महतो अहङ्कारस्य विकासो ऽपि सम्भव:। अत वैकारिक-तैजस-भूतादिरूपेण महतो विकास: सम्भवति । "कारणगुणा: कार्यगुणानारभन्ते" इति न्याय:सर्वथा ऽत्रानुकूलो ऽस्ति । त्रिधाहङ्कारेणैव महत: त्रिगुणात्मकता गतार्था भवति ।

---

1. वैकारिकस्तैजसश्च भूतादिश्चैव तामस: ।
   त्रिविधो ऽयमहङ्कारो महत:संबभूव ह ।। [म0भा04/18]
2. क- सात्त्विको राजसश्चैव तामसश्चेति त्रिधा महान्। [मा0पु045/1?]
   ख- सात्त्विको राजसश्चैव तामसश्च त्रिधोदित:। [वा0पु01/4/49]
3. सर्गकाले महत्तत्त्वमहङ्कारस्ततो भवत् ।
   वैकारिक: तैजसश्च भूतादिश्चैव तामस: ।। [मा0पु045/37]

121

4· इन्द्रियाणि-

पुराणेषु महाभारते च इन्द्रियाणि तैजसानि वैकारिकानि च मतानि सांख्यतत्त्वकौमुद्यां प्रमाया पृष्ठ्यो: केवलं तानि तैजसानि उक्तानि । इन्द्रियाणामुपादानकरणं अहङ्कार एवाभिमतोऽस्ति । एषां प्रवर्त्तकं रजोऽस्ति । इदं तेजो ह्युच्यते । इन्द्रियाणि प्रवृत्तिशीलानि सन्ति । अत: पुराणेतिहासयो:इमानि तैजसानि प्रोच्यन्ते । विषयाणां प्रकाशकत्वाद् वैकारिकाण्यपि कथ्यन्ते। मार्कण्डेयपुराणे वायुपुराणे च एवंविध: संकेत: स्पष्टतयोपलभ्यते । सर्गाणां[1] मार्कण्डेयपुराणस्य कथनमस्ति ।

महाभारते इन्द्रियमन:संवादेन स्पष्टं प्रतीयते यद् अन्त:-करणानि परीक्षरूपेण विषयान् गृह्णन्ति, बाह्यकरणानि च द्वाररूपेण विषयग्राहकानि सन्ति । अत इन्द्रियान्त:करणानां व्यापारो युगपत् प्रतीयते । यथा कमलपत्रसमूहस्य सूच्या भेदने युगपत्प्रवृत्तिर्भवति, किन्तु प्रत्येक पत्रं क्रमशो विध्यते तथैवेन्द्रियाणां कर्माणि युगपत्प्रतीयन्ते, परन्तु वस्तुत:तानि क्रमश एव भवन्ति । मार्कण्डेयपुराणस्य रूपकमिदमेव तथ्यं स्पष्टयति । अत इन्द्रियवृत्तयो युगपद् मन्तुं शक्या:। कर्मेन्द्रियाणि वर्तमानकालिकानि सन्ति । ज्ञानेन्द्रियाणि अन्त:करणं च भूतभविष्यत्कालिकानि मन्यन्ते ।

वस्तुतो बुद्धिरेव विभिन्नान् विषयान् मनसो माध्यमेन इन्द्रियगोचरान् करोति । अत्रापि एतत्कार्यमयुगपदेव भवति ।प्राकृतिकत्वादिन्द्रियाणि न स्वत: प्रकाशशीलानि सन्ति, किन्तु प्रकाशार्थमेषां पुरुषस्यापेक्षा भवति । एषां परिज्ञानं मोक्षस्योपकारि अभिमतमतो

---

1· वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकं स्मृतम् ।

[ मा०पु०44/37 ]

मोक्षाय इन्द्रियविचार आवश्यको ऽस्ति ।

## 5· तन्मात्रा महाभूतानि च

तन्मात्रा:

मार्कण्डेयपुराणे इन्द्रियवर्ग: तन्मात्रानन्तरं विकसितो-ऽभिमत:। कूर्मपुराणातिरिक्तं सर्वत्र एवमेव क्रम उपलभ्यते । नव-विधसर्गवर्णनप्रसङ्गे ऐन्द्रिक:सर्ग: तृतीय:, तन्मात्रसर्गश्च द्वितीय: प्रोक्त:। महाभारते ब्रह्मपुराणे च अहङ्कारस्तृतीय:, तामसश्चतुर्थ:, इन्द्रियवर्ग: पञ्चमो ऽस्ति । महतो ऽहङ्कारविकासवर्णने- "तृतीयं सर्गमित्याहुरेतद्बुध्यात्मकं स्मृतम्" इन्द्रियवर्ग: तन्मात्रसर्गश्च पञ्चम: प्रोक्त:। अत्रापि तन्मात्रसर्ग:इन्द्रियवर्गात् पूर्वमेव समुत्पन्न: कथित:। शब्दादिविषयाणां विकासानन्तरमिन्द्रियाणां प्रादुर्भावस्वीकारस्येदं रहस्यं वर्तते । यद्विषयाणां भोगाय इन्द्रियाणां प्राप्तिर्भवति । "चक्षुरालोकायैव, इत्यादिना इदमेव सिध्यति । शब्दस्पर्शरूपरस-गन्धानां प्रत्यक्षाय श्रोत्रादीनां विवेचनप्रसङ्गे स्पष्टमुक्तमस्ति।[2]

नारदपुराणे 44 ब्रह्मपुराणे 236 महाभारते शान्तिपर्वणि 294 अध्याये च किञ्चिच्छब्दान्तरेणायमेव भाव:प्रयुक्तो ऽस्ति । ज्ञानेन्द्रियकर्मेन्द्रियरूपेण इन्द्रियाणां विभाजनमपि सर्वत्र स्वीकृतमस्ति। सूक्ष्मशरीरस्य प्रमुखावयवरूपेण एकादशेन्द्रियाणां सत्ता आवश्यकीया ।

---

1· ब्र० पु० 240/27-29

2· शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मन: ।

स्परागात्तथा चक्षु: घ्राणगन्धजिघृक्षया ।। [मा०पु० 56/35]

पुराणेतिहासयोराधारे दश बाह्यकरणानि मन उभयात्मकं बुद्ध्यहङ्कारौ चान्तःकरणं मन्यते । विषयाणां प्रत्यक्षत्वाय [5] इन्द्रियाणि सन्ति । अत इमानि ज्ञानेन्द्रियाणि उच्यते । मनसो माध्यमेन बुद्धेरादेशतः कार्यविधायकानि करणानि कर्मेन्द्रियाणि कथ्यन्ते । पुराणेषु महाभारते च इन्द्रियाणि अहङ्काराणि स्वीकृतानि, किन्तु क्व कुत्रापि भौतिकानि अपि मतानि । त्रिविधोऽहङ्कारः ज्ञानक्रियाद्रव्यशक्तिसंयुक्तः कथ्यते । तत्र ज्ञानेन इन्द्रियाणां क्रियया कर्मेन्द्रियाणां द्रव्येण तन्मात्राणां विकासो जायते । तन्मात्रा अहंकारस्य द्रव्यशक्त्या उत्पन्नाः सन्ति । द्रव्यशक्तिसमन्वितो अहङ्कारो भूतादिः तामसो वा कथ्यते । तामसादहङ्कारादुत्पन्नत्वात् आसु प्रकाशभावो भवति ।

एता विशेषादपि सूक्ष्माः सन्ति । तन्मात्रपरिभाषासम्बन्धे महानस्ति मतभेदः । वाचस्पतिमिश्रानुसारं त्रिगुणस्वभावस्याव्यक्तीकरणाद् एता तन्मात्राः प्रोच्यन्ते । अत एवासां नाम अविशेषा इत्युच्यते । युक्तिदीपिकानुसारं स्वकारणाव्यक्तीकारणादेतासां नाम अविशेषा इति भवति । सूक्ष्मत्वादेता इन्द्रियग्राह्या न सन्ति । स्थूलभूतानि आसां लिङ्गानि सन्ति । एतद्द्वारा आसामनुमानं भवति । पुराणेष्वन्यतरत्ववत् तन्मात्रपरिभाषास्वरूपे विस्तृतो विचारः कृतो ऽस्ति । वायु-विष्णु-मार्कण्डेयपुराणेषु आसां सर्वाधिका व्याख्यास्ति ।

महाभारते शान्तिपर्वणि 310 अध्याये शब्दस्पर्शरूपरसगन्धतन्मात्राः पञ्चमः सर्गः मार्कण्डेयपुराणे च द्वितीयः स्वीकृतो ऽस्ति ।

---

मार्कण्डेयपद्मविष्णुपुराणेषु एतास्तन्मात्रा आवरणसिद्धान्तानुसार-माकाश-वायु-अग्नि-अप् -पृथ्वीतिक्रमेण । एकैकगुणात्मकाश्चाभिमता:। लिङ्गभागवतभविष्यमहाभारतेषु एता:क्रमश: एकद्वित्रिचतु:पञ्चगुणा-त्मका: कथिता:। कूर्मपुराणे आवरणस्य चर्चा नास्ति ,किन्तु आसामुत्पत्तिक्रम उपर्युक्त एवास्ति । मार्कण्डेयवद् अत्रापि एकैकगुणा-त्मका:सन्ति ।

मार्कण्डेयवायुविष्णुपुराणेषु आसां परिभाषा दत्ताऽस्ति। पद्मपुराणेऽधिकसाम्येऽपि तन्मात्रपरिभाषा न दत्ताऽस्ति । नारदीयपुराणे गरुडपुराणे च आसामुत्पत्तिसंकेतमात्रं दत्तमस्ति । स्कन्दपुराणे वामनपुराणे च संकेतमात्रमपि नास्ति । अग्निपुराणे एतद्विषये एतावदेव वर्णितमस्ति ।[1] मत्स्यपुराणे स्पर्शादितन्मात्रं प्रोक्तम् शरीरस्य परिभाषा एवं दत्तमस्ति- "श्रयन्ति यस्मात्तन्मात्रा-शरीरं ते न संस्मृतम् ।[2]

एवं तत्तत्पुराणेषु वर्णनवैषम्याद् एस०[3] रावप्रभृतयो विद्वांस: सांख्यस्य विकासात्मतो क्लिष्टतामनुभवन्ति । जयमंगलायां माठर-वृत्तौ सांख्यतत्त्वकौमुद्यां च तन्मात्रेभ्य एव महाभूतानि साक्षादुत्पद्यन्ते। युक्तिदीपिकायां तन्मात्रा:एकद्वित्रिचतु:पञ्चगुणात्मका:कथिता:। जयमंगलायां एकैकगुणात्मका:प्रोक्ता:। एवमेतत् सम्बन्धे द्विविधं समानान्तरं मतं प्राचीनकालत एव प्रचलितमस्ति । द्वयो:पुष्ट्यर्थम्, आगमप्रमाणमपि उपलब्धं वरीवर्ति ।

---

1. अ० पु० 17/4-5
2. म० पु० 3/20-22
3. इण्डियन फिलासफी भाग- 2 पेज 270-279

पञ्चमहाभूतानि -

शब्दस्पर्शरूपरसगन्धतन्मात्राभ्यः क्रमात् आकाश-वायु-चक्षुः-रसना-पृथिव्यः उत्पद्यन्ते । एताः पञ्चमहाभूतानि प्रोच्यन्ते । पञ्चमहाभूतानि एव अन्तिमानि तत्त्वानि स्वीकृतानि । एभ्यः किमपि तत्त्वान्तरं नोत्पद्यते ।

मार्कण्डेयपुराणे पृथ्वी-वायु-आकाश-जल-तेजांसीति पञ्च महाभूतानि अहङ्कारादुत्पन्नानि कथितानि सन्ति ।[1]

---

1. पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
अहङ्कारप्रसूतानि महाभूतानि पञ्चधा ॥
(मा० पु० 16/25)

## पञ्चमो ऽध्यायः

## साङ्ख्ययोगदृष्ट्या सृष्टिविमर्शः

### सांख्यसृष्टिक्रमचक्रम्

1. पुरुषः (उदासीनः)

2. प्रकृतिः

3. महान्

4. अहंकार

| सात्त्विको अहंकारः | राजसो अहंकारः | तामसो अहंकारः | |
|---|---|---|---|
| 5. मनो ज्ञानेन्द्रियाणि च | कर्मेन्द्रियाणि | पञ्चतन्मात्राः | |
| 6. चक्षुः | 11. वाक् | 16. शब्दतन्मात्रा | 21. आकाशः |
| 7. श्रोत्रम् | 12. पाणिः | 17. स्पर्शतन्मात्रा | 22. वायुः |
| 8. घ्राणम् | 13. पादः | 18. रूपतन्मात्रा | 23. तेजः |
| 9. जिह्वा | 14. पायुः | 19. रसतन्मात्रा | 24. जलम् |
| 10. त्वक् | 15. उपस्थः | 20. गन्धतन्मात्रा | 25. पृथिवी |

साङ्ख्ययोगदर्शने स्पष्टतया प्रतिपादितमस्ति यद् अनुलोमक्रमेण तत्त्वानामुत्पत्तिर्भवति । यथा त्रिगुणात्मिकायाः प्रकृतेर्महानुत्पद्यते, महतो अहंकारो जायते, तस्मात् शब्द-स्पर्श-रूप-रस-गन्ध तन्मात्राणि एकादशेन्द्रियाणि चाविर्भवन्ति । पञ्चतन्मात्रेभ्यः आकाश-वायु-तेजो जल पृथिवीनामकानि पञ्चमहाभूतान्युत्पद्यन्ते ।

---

1. प्रकृतेर्महांस्ततो ऽहंकारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ।।
(सां०का० 22)

20

तत्र शब्दतन्मात्रादाकाशं शब्दगुणमुत्पद्यते । शब्दतन्मात्रसहिताद् स्पर्शतन्मात्राद् शब्दस्पर्शगुणको वायुरुत्पद्यते । शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्राद् शब्दस्पर्शरूपगुणं तेज उत्पद्यते । शब्दस्पर्शरूपतन्मात्रसहितरस-तन्मात्राद् रसगुणिकाः शब्दस्पर्शरूपरसवत्य आप उत्पद्यन्ते । शब्दस्पर्श-रूपरसतन्मात्रसहिता गन्धतन्मात्राद् शब्दस्पर्शरूपरसगन्धवती पृथिवी उत्पद्यते। एवं क्रमेण पूर्वपूर्वगुणयुक्तैकैकाधिकगुणान्वितत्वेनाकाशादीनि पृथ्वीपर्यन्तानि पञ्चमहाभूतानि जायन्ते । नारदीयपुराणे पि सांख्यानुसारमेव सृष्टिक्रमः प्रदर्श्यते ।[1]

तत्त्वानां संहारः विलोमक्रमेण जायते । यथा- पृथिव्या जले, जलस्य तेजसि, तेजसो वायौ,वायोश्चाकाशे लयो भवति । एवं सर्वाण्यपि तत्त्वानि स्वकारणेषु लीयन्ते । यथा सागरादुत्थितानि तरंगाणि पुनः तत्रैव शाम्यन्ति ,तथैव समस्तानि तत्त्वानि अनुलोमक्रमेण उत्पद्यन्ते प्रति-लोमक्रमेण च स्वकारणभूतेषु तत्त्वेषु लीयन्ते ।[2]

सांख्यदर्शनानुसारं प्रकृतिरेव कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः। पुरुषस्य न किमपि कार्यं विद्यते, अन्ते प्रकृतिरेवावशिष्यते ।

भारतीय षड्दर्शनेषु सांख्यस्य प्रभावः सृष्टिप्रक्रियायां विपुलो जातः। तत्त्वानां मीमांसा सांख्यस्य षड्दर्शनेष्वनन्यतमास्ति । सांख्यस्य पौराणिकसृष्टौ पूर्णः प्रभावो स्ति, परन्तु तस्यानुसरणं पाद्मं पुराणं न करोति ।सांख्य

---

1. विशेषगुणं प्रोक्ता द्वौ गुणौ मातरिश्वनः ।
ज्योतिषि चत्वारि सलिले पञ्चभूमिजाः ।। [ना०पु० 33/7]

2. अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः ।
गुणा गुणेषु सततं सागरस्योर्मयो यथा ।।
[म०भा० 12/306/31-32]

सांख्यं प्रकृतिपुरुषौ द्वे तत्त्वे स्वीकरोति, परन्तु पुराणदृष्ट्या एतौ परमात्मन एवोत्पद्येते,प्रलयवेलायां तत्रैव च विलीयेते ।

मार्कण्डेयपुराणे वैशिष्ट्येन सृष्टेर्वर्णनं क्रियते ।पुराणानां पञ्चलक्षणेष्वयं मुख्यं वा लक्षणं सर्गः [सृष्टिः] वर्तते ।पौराणिक सृष्टौ सांख्यकारिकाद्वारा निर्दिष्टायाः सृष्टेर्विशेषप्रभावोऽस्ति । सांख्ययोगस्य प्रभावः मार्कण्डेयपुराणे विशेषरूपेण दृश्यते । मार्कण्डेयपुराणे चतुर्थे ध्याये पञ्चचत्वारिंशत्तमाध्यायादारभ्य त्रिपञ्चाशत्तमाध्यायपर्यन्तं सृष्टिःसांख्यानुसारमेव प्रतिपादिता । अतः पुराणानां सृष्टिप्रकरणे सांख्यीयसृष्टेर्विपुलो हि प्रभावः। एवं सत्यपि पौराणिकी सृष्टिःसांख्यीयसृष्टेरक्षरशो ऽनुकरणं न करोति, पर पौराणिकसृष्टेःविभिन्नांशेष्वस्ति वैशिष्ट्यं स्वातन्त्र्यञ्च । सांख्येन प्रभावितायामपि तस्यां स्वकीयमस्ति व्यक्तित्वम् ।

पौराणिकं सांख्यं निरीश्वरवादी नास्ति, किन्तु तदस्ति सेश्वरं सांख्यम् । पुराणेषु सांख्य-वेदान्तमतयोर्न किञ्चिद् वैषम्यं विरोधो वा दृश्यते, यथावसरमिश्रितरूपेण वर्ण्यते । तत्र तु सांख्य-वेदान्तयोरस्ति मञ्जुलं सामञ्जस्यम् । प्रकृति-पुरुषयोः द्वैतप्रतिपादकं सांख्यम्, अद्वयब्रह्मप्रतिपादकं वेदान्तदर्शनं तद पौराणिकदर्शनस्य मूलभित्तिं निर्माति । पुराणानुसारं प्रकृतिपुरुषौ न खलु भिन्ने तत्त्वे, प्रत्युत तौ द्वावपि ब्रह्मणोऽभिन्नावेव स्वकार्यसम्पादने समर्थौ भवतः । ब्रह्म तयोरुभयोरस्ति अध्यक्षः,यदाधारा तयोःकार्यनिर्वृतिः स्फुरति ।

---

1. यत्र मुक्तिर्विनिर्दिष्टा मुक्ताः पश्यन्ति तां बुधाः ।
   ज्ञानाभ्यासोपलम्भिनी निष्ठा सा योगिनां परा ।।
   तत्त्वोद्भवा तु या सेना सर्वसंस्थानकारिणी ।।

   [मा० पु० ४/४५-४७]

सांख्ये सृष्टेर्विकासो नयोर्द्वयोः प्रधानपुरुषयोः पारस्परिक-प्रभावस्य संयोगस्य वा परिणामः फलम् । सांख्ये एतौ द्वावपि अनादी नित्यौ स्वीकृतौ स्तः पर पुराणेषु एतौ द्वावपि विष्णोर्द्वे रूपे भिन्नौ स्तः । अस्योत्पत्तिः विष्णुसत्तायामेवाधारिता स्ति । विष्णुपुराणे स्पष्टं कथितं यद् विष्णोः निरुपाधिकाद् स्वरूपाद् प्रधानपुरुषात्मकं रूपद्वयमाविर्भवति, विष्णोः कालात्मकरूपाद् एतौ द्वावपि सृष्टिकाले संयुक्तौ प्रलयकालायाञ्च वियुक्तौ भवतः । अस्मात् विष्णुः कालाधि-कारेण सृष्टिप्रलयौ करोति ।[1]

प्रकृति-पुरुष-व्यक्त-काला एते चत्वारो विष्णो रूपाणि सन्ति। कालसृष्टिरूपिणौ विष्णोः क्रीडास्ति, अन्यथा तस्याप्रकाशकता भवेत । प्रायः सर्वेषु पुराणेषु कालसृष्टेः वर्णनमुपलभ्यते । सर्गस्तावद् त्रिविधः- प्राकृतसर्गः, वैकृतसर्गः, प्राकृतवैकृतसर्गश्च । तत्र प्राकृतसर्गस्त्रिविधः, वैकृतसर्गः पञ्चविधः, प्राकृतवैकृतसर्गश्चैकविधः कौमारसर्गों एको भवति । एवं मार्कण्डेयपुराणे सृष्टेः नवप्रकारा निर्दिष्टाः सन्ति ।[2]

---

1• विष्णोः स्वरूपात् परतो हि ते द्वे रूपे प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरं तद् द्विज कालसंज्ञम् ॥
[वि० पु० 1/ 2/24]

2• पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ।
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ॥
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ॥
[ मा० पु० 44/35-36]

32

[अ] प्राकृतसर्गः

प्रथमः प्रकृतो महतत्त्वस्य सर्गो प्राकृतसर्गः प्रोच्यते ।[1] श्रीमद्भगवद्गीतावचनानुसारमपि ब्रह्म महत्तत्त्वस्यैवाभिधा बोध्यम् । सांख्यसिद्धान्तानुसारं महत्तत्त्वमेव प्रकृतिपुरुषसंयोगस्य प्रथमःपरिणामो ऽस्ति। एतदेव मयापि स्वीकृतम् ।[2]

[आ] भूतसर्गः-

पञ्चतन्मात्राणां सृष्टिर्भूतसर्गनाम्ना व्यवह्रियते, यतो हि पञ्चतन्मात्राः पृथिव्यादीनां पञ्चमहाभूतानामत्यन्तं सूक्ष्मावस्थाया बोधिकाः सन्ति । एताश्च सांख्ये ऽविशेषनाम्नापि प्रख्याताः सन्ति । मार्कण्डेयपुराणे ऽपि तन्मात्राणां द्वितीयसर्गः भूतसर्गनाम्नाभिधीयते ।[3]

[इ] वैकारिकसर्गः

इन्द्रियसम्बन्धिनी सृष्टिर्वैकारिकसर्गः प्रोच्यते ।अत्र सांख्याभिमतप्रक्रिया पुराणानामप्यस्ति अभिमता, यतो ऽहंकारस्य तामसांशेभ्यः तन्मात्राणामाविर्भावो भवति । सात्त्विकांशेभ्य इन्द्रियाण्युत्पद्यन्ते । राजसांशास्तूभयत्र क्रियाबीजानि भवन्ति। अतस्तेभ्यः कस्यचित् पदार्थस्याविर्भावो न भवति । पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि,उभयात्मकं मनश्चेति सन्ति एतानि एकादशेन्द्रियाणि। वैकारिकसर्गः ऐन्द्रियकः स्मृतः,एष प्राकृतसर्गःबुद्धिपूर्वकःस्मृतः ।[4]

---

1. प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः । [मा०पु० 44/31 पू०]
2. मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
   सम्भवः सर्वभूतानां ततो भवति भारत ।। [गीता० 14/3]
3. तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते । [मा०पु०44/31 उ०]
4. वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः।



   इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः ।। [मा०पु० 44/32]

134

[ग] देवसर्ग:

परमपुरुषार्थमोक्षसाधिकाया: सृष्टे:परमप्रियत्वात् तिर्यग्योनिसृष्टया अपि अतुष्टयन् प्रजापति: पुनर्देवान् ससर्ज । अयं सर्ग: ऊर्ध्वलोकनिवासी सात्त्विकवर्गो ऽस्ति,यो विषयसुखप्रधानो बाह्याभ्यन्तर ज्ञानसम्पन्नो ऽस्ति ।[1]

[घ] मानुषसर्ग:

पुरुषार्थस्यासाधकत्वेन देवसर्गादपि अतुष्यता सत्यसंकल्पेन ब्रह्मणा पुनर्ध्यानादेव प्राणिवर्गो निर्मित:। यत्र सत्त्वरजस्तमसां त्रयाणां गुणानामाधिक्यं विद्यते । अतस्तत्र तमस उद्रेकादेव सर्गो दु:खबहुल:रजस उद्रेकात् क्रियाशील: सत्त्वोद्रेकाच्च बाह्याभ्यन्तरज्ञानसम्पन्नो भवति । अस्य वर्गस्य प्राणी मनुष्य उच्यते । अतो ऽयं सर्ग:मानुषसर्ग: कथ्यते ।[2]

[ङ] अनुग्रहसर्ग:

प्रकृत्यनुग्रहात् जायमानत्वादयमनुग्रहसर्ग: प्रोच्यते । मार्कण्डेयपुराणे विपर्यय सिद्धि-शान्ति-तुष्टिभेदात् अनुग्रहसर्ग:चतुर्धा भिद्यते । तत्र विपर्यय: स्थावरेषु शान्तिस्तिर्यग्योनिषु,सिद्धि:,मनुष्येषु, देवेषु च तुष्टि: तिष्ठतीति व्यवस्थापितम् ।[3]

सांख्यकारिकायामयं सर्ग:विपर्ययशक्तितुष्टिसिद्धिनाम्ना प्रख्यातो ऽस्ति।[4]

---

1· प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोत: समुद्भव: ।
तुष्टात्मनस्तृतीयस्तु देवसर्गो हि स स्मृत: ।। [मा0पु044/23]

2· यस्मादर्वाग्व्यवर्तन्त ततो ऽर्वाक् स्रोतस स्तुते ।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिका: ।।
तस्मात्ते दु:खबहुला भूयोभूयश्च कारिण: ।
प्रकाशा बहिरन्तश्च मनुष्या:साधकाश्च ते।। [मा0पु044/26-27]

3· पञ्चमो ऽनुग्रह: सर्ग:स चतुर्धा व्यवस्थित: ।



विपर्ययेन सिद्ध्या च शान्त्या तुष्ट्या तथैव च ।। [मा0पु044/28]

३. प्रलयः

सर्गप्रतिसर्गरहस्यं यथा सांख्ये तत्त्वानां विचाराय अनुलोमप्रतिलोमौ द्वौ क्रमौ स्वीकृतौ स्तः, तथैव पुराणेतिहासयोरपि सर्गप्रतिसर्गौ तथैव प्रदर्शितौ स्तः । यथा तत्त्वानां स्वरूपं बोधयितुं मन्वन्तरानन्तरं प्रतिमन्वन्तर उपस्थापितो ऽस्ति, तथैव सर्गवर्णने प्रथमं वैकृतसर्गः पश्चात् प्राकृतसर्गो वर्णितः। प्रतिसर्गे प्रतिलोमक्रमो ऽस्ति। अर्थात् प्रथमं वैकृतसर्ग उपतिष्ठते, ततःप्राकृतसर्गः । इदं विकासवादसिद्धान्तानुसारमेवास्ति । एतदेव दर्शयितुं सागरोर्मिकूर्मांग-न्यायश्चोदाहृतो ऽस्ति । सूर्योदयास्तमनादिरूपेण वस्तूनि लीनानि विकसितानि च प्रदर्शितानि मार्कण्डेयपुराणे ।[1]

एतद् विरुद्धं सर्वथा नवीनां सृष्टिं स्वीकुर्वतां विचारस्य कृते मार्कण्डेयपुराणे नास्ति प्रश्नविमर्शः । कर्मणो विवेचनो ऽपि यद् नैमित्तिकप्रलये कर्मणः स्थूलरूपस्यैव नाशो भवति ।[2] तत्सूक्ष्मरूपन्तु तदवस्थं तिष्ठति । सृष्टिसमये पुनः स्वकर्तारमुपतिष्ठते । संसारचक्रस्य विच्छिन्नतां दर्शयितुं कर्मसंसारौ अन्योन्याश्रयौ कथितौ । धाता यथा पूर्वमकल्पयदित्यादि ऋग्वेदकथनमपि एतदेव प्रतिपादयति यद् लीनस्यैव पुनःप्रतिपादनं भवति । सत्कार्यवादविचारेणापि स्पष्टमस्ति यद् वस्तूनामनुच्छेदो नवीनानामनुत्पाद एव तत्त्वक्रमम् । सर्वथा

---

*. एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात् तस्य च भेदास्तु पञ्चाशत् ।।सां०का०46

1. यदा न सृष्टिर्भूतानामस्ति किं नु न चास्ति वा ।
काले वै प्रलयस्यान्ते सर्वस्मिन्नुपसंहृते ।। [मा०पु०43/2]

2. भूर्लोकोऽथ भुवर्लोकः स्वर्लोकस्तन्निवासिनः ।
तदा विनाशमायान्ति महर्लोकश्च तिष्ठति ।।
[मा०पु० 43/41]

नवीनसृष्टिस्वीकारेण यथा प्राचीनां पूर्वसृष्टेरस्वीकारेण सर्वं सामान्य-लोकाभ्युपगतो सिद्धान्तो विकलाङ्ग स्यात् । अतःप्राचीनानामेव पदार्थानां नवीनत्वेन स्वीकार एव श्रेयस्करः, आगमसमर्थितश्चास्ति । अतएव स्पष्टमिदं मार्कण्डेयपुराणे कल्पितकालिकी भूतकालेन सह क्वचित्-क्वचित् भविष्यकालेऽपि कृता स्ति । विभिन्नपुराणेषु सः, तद्, तानि, तान्, पूर्ववत्, यथापूर्वमित्यादीनि पदान्यपि इदमेव बोधयन्ति यद् वस्तुन उत्पत्तौ निरोधे च केवलमाकारपरिवर्तनं भवति । किन्तु स्वरूपं तदेव, पुरा तादिषयेषुमिताश्चतुर्भोग-सर्गाश्रितान् संकेतयित्वा वर्तमाने काले सर्गस्य वर्णनं कृतमस्ति । एभिर्भूतभविष्यद्वर्तमानकालभेदानां पारस्परिक स्थितिर्भवति । अतएव तासां कालस्य पृथक् स्थितिर्न स्वीकृतास्ति । एतेन स्पष्टमस्ति यद् कालः कार्यकारणव्यवस्थायाः नियामकोऽस्ति । एवं सर्ग-प्रतिसर्गयोर्व्यवस्थायाःप्रक्रमेण सिद्धान्तो व्यवस्थापितः । उपर्युक्तविवेचनैः व्यक्तं भवति यद् प्राकृतप्रलयानन्तरं प्राकृतसृष्ट्यन्तरो भवति ।[1] पृथिव्यां वर्तमानस्य चराचरस्य नाशानन्तरं पृथिव्याः जले लयो भवति । एतदवस्थितिर्मध्ये प्राकृतप्रलयोऽयं प्रोच्यते । अयं कल्पान्तो भवति । एतदनन्तरं गन्ध-रस-रूप-स्पर्शाः क्रमशः स्वस्वकारणेषु विलीयन्ते । अयं प्राकृतिक प्रलयो द्विपरार्धावसाने भवति । महाभारते प्राकृतप्रलयान्तरः पुराणानुरूप एवास्ति ।[2]

एवं सर्गः पद्म-वायु-ब्रह्म-ब्रह्माण्ड-मार्कण्डेयपुराणेषु सविस्तर-मुपलभ्यते । ब्रह्मपुराणे सत्त्वाधिक्या अविद्यापाया आवृत्त्या सर्ग

---

1. पृथिव्यां यानि भूतानि जङ्गमानि ध्रुवाणि च ।
तान्येवाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥
[म० १२/३३३/३]

2. ब्रह्मपुराणे 230 अध्याये

143

षष्ठोऽध्यायः

योगशब्दस्य अर्थाः

युजिर् योगे इति धातोः कर्तरि घञ् प्रत्ययेन निष्पन्नस्य योगशब्दस्यार्थः संयोगः। करणे घञ् तु तदर्थो मेलको भवति । तथा च नर-नारायणयोः संयोगः, एकीकरणसामग्री वा योगशब्दार्थः । क्रियासाकदृष्ट्या साधनस्यैव नाम योगः। एतच्च नरस्य नारायणेन सहैक्यसंपादनाय यत्साधनमुपदिष्टं तदेव योगो नाम ।

वस्तुतो योगशब्दः एकाग्रतार्थकाद् युज् समाधौ इति धातोरेव निष्पद्यते । ततो हि अष्टाङ्गयोगेषु नियमतःचित्तस्यैकाग्रता अपेक्षितास्ति । युज्यते समाधत्ते नेनेति करणव्युत्पत्त्या साधितस्य योगशब्दस्य नरस्य नारायणेन सह सम्बन्धे सहायकत्वाद् योगस्य अष्टाङ्गयोग एवार्थः । भावव्युत्पत्त्या निष्पन्नस्य योगशब्दस्य मुख्यो र्थःजीवस्य ईश्वरेण सह संयोग एव ।

यद्यपि भगवता पतञ्जलिना स्वकीये योगसूत्रे "योगश्चित्तवृत्तिनिरोधः"[1]। इत्येकं सरलं निर्वचनं योगशब्दस्य कृतमस्ति,किन्तु गीतायां विविधानि निर्वचनानि दरीदृश्यन्ते -"समत्वं योग उच्यते" योगःकर्मसु कौशलम्""सर्वकर्मसन्यासपूर्वकं भगवत्यनन्यतत्परता योगः{12/6} मनोवाक्कायकर्मभिरात्मशुद्धये कर्मसम्पादनं योगः" "आत्मवत् सर्वत्र सुखदुःखानुभूति र्योगः{6/32} इत्यादिभगवन्मुखनिर्गतानां निर्वचनानां पतञ्जलिनिर्वचनेन परस्परं समन्वयो न स्पष्टं प्रतीयते तथापि सर्वेषां वर्गीकरणे क्रियमाणे त्रयाणां कर्मकाण्डोपासनाकाण्डज्ञानकाण्डानां मध्ये येन केनापि प्रकारेणान्तर्भावो भवत्येव ।

---

1· यो० सू० -1/2

144

अतो योगशब्दो हि न केवलं चित्तवृत्तिनिरोधार्थक एव, अपितु बहुषु अर्थेषु अस्य वृत्तिः[1]। योगशब्दस्य प्रेमार्थे प्रयोगो प्राप्यते ।

अस्मिन् पद्ये प्रेमरज्ज्वाकृष्टस्य निष्क्रियस्य अनन्तब्रह्माण्ड-नायकस्य अनेकगुणगणनिलयस्य तस्य प्रेम्णैव योगयुक्तता सङ्गच्छते ।

ज्योतिषशास्त्रे सप्तविंशतिसंख्याकेषु विष्कुम्भादिषु योगेषु अपि योगशब्दो दृक्पथमवतरति । तत्रैव करणामृतशब्दैः सह वर्तमानो यं योगशब्दः स्वस्य संहननार्थकतां व्यनक्ति ।

वायुपुराणे आध्यात्मिकविषयमधिकृत्य योगशब्दस्यापरोऽर्थः[2]।

अत्र क्रियायोगान्तर्गतस्य योगशब्दस्य समाराधनमर्थो विभाति। आध्यात्मिकाधिदैविकाधिभौतिकैः दुःखैःपरिपीड्यमानस्य पुंसो दुःख-विच्छित्तये परमस्य पुरुषस्य समाराधने सदात्यन्ताभावो भवतीति सुनिश्चितम्[3]।

अर्थात् विपश्चितः संसारार्णवनिमग्नानां विषयोपहतचेतसां सचेतसां कृते हरितोषणाय आराधनरूपया परया भक्त्या तं परब्रह्म-परमात्मानं भेजिरे ।

---

1. स्वीयान् गुणान् पवित्रान् प्रवदंस्तथासौ
   तां प्रेमदामनुचकार स योगयुक्तः ।। [दे०भा० 1/3/5]
2. इत्युक्तः स तदा प्राह क्रियायोगं महात्मनाम् ।
   नराणामुपकारार्थं दुःखविच्छित्तिकारकम् ।। [वा०पु० 17/25
3. समाराध्य जगन्नाथं क्रियायोगेन वाग्ध्वाः ।
   अन्ये मोक्षं परं जग्मुस्तस्मात्तन्मोक्षकारणम् ।।
   [वा०पु० (35 ]

145

योगसाधनान्तर्गतस्य योगशब्दस्य ब्रह्मणि संयोगो र्थः।[1]

श्रीमद्भगवद्गीतायां अप्राप्तस्य वस्तुनःप्राप्तिःयोग-[2]
शब्दस्यार्थः।

योगसूत्रे च -योगश्चित्तवृत्तिनिरोधः । इति सूत्रता भगवता पतञ्जलिना चित्तवृत्तीनां निरोध एव योगपदस्यार्थ उक्तः। तेन तदा परमात्मनः स्वस्वरूपे वस्थानं भवति ।[3]

योगशब्दस्य इतो पि व्यापकमर्थं दर्शयितुं भगवता व्यासेन श्रीमद्भागवते पुराणे योगशब्दस्य ज्ञानकर्मभक्तयो र्थाःनिर्दिष्टाः।[4]

मार्कण्डेयपुराणे योगस्य महिमा वर्णिता स्ति ।[5]

---

1. आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।
   तस्याः ब्रह्मणि संयोगो योग इत्यभिधीयते ।।
   [अ०पु०379/25]
2. अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
   तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।
   [गीता09/22]
3. "तदा द्रष्टुः स्वरूपे वस्थानम्" ।।-[योगसू० 1/3]
4. योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया ।
   ज्ञानं कर्म च भक्तिश्च नोपायो न्योऽस्ति कुत्रचित् ।।
   [श्री०भा०11/20/6]
5. योगे च शक्तिर्विदुषां येन श्रेयः परं भवेत् ।
   मुक्तिर्योगात् तथा योगः सम्यग्ज्ञानान्महीपते ।।
   [मा०पु०36/2]

## २· योगस्य भेदाः

साधनरूपस्य योगस्य विचारे क्रियमाणे शारीरिकमानसिक-बौद्धिकाध्यात्मिकदृष्टिभिः साधकानां सामर्थ्येन अभिरुच्या वा नैके भेदा भवन्ति । स्वाभाविकाधारभेदेन साधने पि बहवो भेदा अनिवार्या भवन्ति । अतो नरस्य नारायणेन सहैक्यसम्पादकं साधनं सर्वेषां कृते समानं भवितुं नार्हति, प्रत्युत स्वस्वाधिकारानुसारं साधकाः स्वीयं स्वीयं साधनं निश्चित्य प्रवर्तन्ते । अतः साधनरूपो योगो नैकप्रकारको भवति । तत्र या साधनसामग्री नरं नारायणरूपे समुपस्थापयति सा मुख्यया वृत्या योग इत्युच्यते, या च साधनसामग्री तत् सहायिकास्ति सा गौणतया योगशब्दस्यार्थः । एवं गौणमुख्यविचारेण योगेषु तारतम्यमस्ति । तथा चाधिकारभेदाद् विभिन्नप्रकाराणां योगानां तत्तद्ग्रन्थेषु वर्णनमुपलभ्यते । तथाहि -

क्रियायोगः,समाधियोगः,जपयोगः, मन्त्रयोगः,हठयोगः, लययोगः, राजयोगः, कुलकुण्डलिनीयोगः, वाग्योगः, शब्दयोगः, अस्पर्शयोगः, सहजयोगः,शून्ययोगः,श्रद्धायोगः, प्रेमयोगः, प्रपत्तियोगः निष्कामकर्मयोगः, कर्मयोगः,अभ्यासयोगः, राजाधिराजयोगः, महायोगः,पूर्णयोगः, अभावयोगः, स्पर्शयोगः,पाशुपतयोगश्च ।

प्राचीनेषु आगमशास्त्रेषु वाग्योगापरपर्याय शब्दयोगनाम्ना योगप्रणाली समुल्लिखिता । व्याकृतशब्दस्य वैखरीदशातो मध्यमामुत्तीर्य पश्यन्तीस्वरूपे प्रवेश एवास्य योगस्य मुख्यमुद्देश्यम् । पश्यन्तीदशातः परावस्थायामव्याकृते पदे गतिस्थिती स्वभावतो नियमेन स्वत एव जायते । अतो न ते कस्याश्चन साधनाया आन्तरिकं लक्ष्यम् । गुरूपदिष्ट

अनपणाल्या साधने नुष्ठीयमाने यदा शब्दः सम्यक् शुद्धः संस्कृतश्च जायते तदा सा दिव्यवाणीरूपेण, सृष्टिकारिब्रह्मवाणीशब्दरूपेण वा परिणमते । एकमेकमपि शब्दं प्रणाल्या नया संशोध्य जीव एकान्तिकीं कृतकृत्यतामासादयति । एक एव संशुद्धः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति । शब्दमर्मविदो वशिष्ठादयो महर्षयः अनेनैवोपायेन अलौकिकशक्तौ अधिकृता अभूवन् ।

अनासक्तियोगस्तु गीतायां निष्कामकर्मयोग एवान्तर्भवति। अद्यत्वे यः त्वाधुनिकपुस्तकेषु प्रचलितः प्रचारद्वारा प्रसिद्धश्च असहयोगः न योगान्तर्गतो भवितुमर्हति । यतो योगदर्शने साधनयोगमध्ये निर्दिष्टायां गीतायामनपेक्षोदासीन शब्दद्वारा सूचिताया उपेक्षाया एव नामान्तरमसहयोगः। अतो यं न किञ्चिन्नवीनं वस्तु नापि योगो वक्तुं शक्यः ।

योगसाधनेन मनसो नैकात्म्यभावस्य निरसनपूर्वकं ब्रह्मभूयत्वमाप्नोतीति अवधारणतो जीवः परब्रह्मणो भिन्नमिवात्मानं मन्यमानो विविधां दुःखसन्ततिमनुभवति । अंशस्यांशिनि आकर्षणं स्वाभाविकं भवति । यथोर्ध्वमाक्षिप्तं मृत्तिकांशं लोष्ठं मृत्तिकायामेव पतति तथैव ब्रह्मणोंऽशो जीवः यतो ब्रह्मणो निर्गतस्तत् तत्प्राप्त्यै भवति प्रवृत्तिः स्वाभाविकी ।

एवं किल जीवं ब्रह्मपदं प्रापयितुं पुराणेतिहासयोः यावन्ति साधनानि निर्दिष्टानि सन्ति, तेषु त्रिविधो योग एवास्ति मुख्यतमः। अत एव भगवता श्रीकृष्णेनोद्धवं प्रति श्रीमद्भागवतस्यैकादशस्कन्धे मानवानां कल्याणाय त्रिविधो योगः प्रोक्तः। तत्र विषयेष्वनासक्तस्य

निवृत्तेन्द्रियव्यापारस्य संन्यासिनः कृते ज्ञानयोगस्योपदेशः, यज्ञादि-कर्मकलापेषु अनिवृत्तचित्तस्य विषयाभिलाषिण एव पुंसः कर्मप्रवृत्तये कर्मयोगस्योपदेशः, भगवतो गुणकथाश्रवणादिषु जातश्रद्धस्य नातिनिर्वि-ण्णस्य नातिसक्तस्य पुरुषस्योपादेयत्वेन भक्तियोगो निर्दिश्यते ।

अत एव भगवत्सम्बन्धिनीषु कथासु सततं प्रवर्तमानस्य निष्कामकर्मिणः स्वधर्मपालनपरायणस्य भगवति जायते अहैतुकी भक्तिः। गीताकारेणापि साधारणतया योगो ज्ञानयोग-कर्मयोग-भक्तियोगभेदात् त्रिषु भागेषु विभक्तो ऽस्ति । विभिन्नानां योगिनां रुच्यनुसारं योगस्य पद्धतिः अपि विभिन्नभागेषु विभक्ता ऽस्ति । योगसाधनस्य क्रिया-सिद्धान्तमनुसृत्य मन्त्र-हठ[1]-लय-राजयोगभेदाद् विभक्तमेकमेव योगसाधनं चतुर्धा विभक्तमस्ति ।

<u>मन्त्रयोगिनः</u>

मन्त्रमाश्रित्य जीवात्मपरमात्मनोः सम्मिलनमाकाङ्क्षते । शब्दात्मकस्य मन्त्रस्य साहाय्येन जीवः क्रमशः ऊर्ध्वं गच्छन् शब्दातीते परमात्मनि स्थानमवाप्नोति । वैखरीशब्दतः क्रमशो मध्यमामवस्थां भिन्दन् पश्यन्तीशब्दे प्रवेश एव मन्त्रयोगस्य मुख्यमुद्देश्यम् । पश्यन्ती-शब्दो यः स्वप्रकाशमानः चिदानन्दः। चिदात्मकस्य पुरुषस्य सैव षोडशी कला । एतदेवात्मज्ञानस्य, इष्टदेवता-साक्षात्कारस्य, शब्दचैतन्यस्य वा प्रकृष्टं फलम् । अवस्थामिमामधिगतो जीवः कृतकृत्यो भवति ।

---

1. मन्त्रो हठो लयो राजयोगोऽन्तर्भूमिकाक्रमात् ।
एक एव चतुर्धायं महायोगोऽभिधीयते ।।
{यो० उ० 1/129}

मूलाधारतो निरन्तरं शब्दस्रोत ऊर्ध्वं गच्छति । बहिर्मुखो जीव इन्द्रियवशवर्ती भूत्वा विषयेष्वासज्यते । यदा योगक्रियाकौशलेन इन्द्रियाणां बहिर्गतिः निरुध्यते प्राणमनसी च स्तम्भिते भवतः तदा साधकः चेतनशब्दमाधुं श्रोतुं साधनं लभते । इडापिङ्गलयोर्नाड्योः गती अवरुध्य प्राणमनसोः प्रवेशे सम्पद्यमाने तदिदं सारस्वतं स्रोतो नु-भूयते । इदमेव साधकमाज्ञाचक्रं नयति तत्र च बिन्दुस्थानं विभेद्य सहस्रारकेन्द्रेमहाबिन्दुं यावत्स्थापयति । सततं जीवो यं हंसमन्त्रं जपति गुरुकृपया प्राणे विपरीतभावमापन्ने स सो हमिति मन्त्ररूपेण परिणमते ।

एवं च योगक्रियाद्वारा मूलाधारे स्थितां कुण्डलिनीं समुद्बोध्य षट्चक्रभेदनद्वारा सुषुम्णापथेन ब्रह्मरन्ध्रोपरि सहस्रदलकमल-स्थिते परमशिवे लय एव लययोगस्य प्रधानमस्ति प्रयोजनम् ।

हठयोगिनः:

षट्कर्म आसन-बन्ध-प्राणायामादिषु शारीरिकक्रियासु विशेषबलं दत्त्वा देहं बलिष्ठं स्वस्थं कार्यशीलं च विधातुं प्रयतन्ते योगिनः । तेषामयं विश्वासो ऽस्ति यन्नित्यशुद्धबुद्धमुक्तस्वरूपं स्वयं प्रकाशमात्मतत्त्वं विशुद्धे चित्ते एव स्फुरति नान्यथा ।योगक्रियाभिः मूलाधारे स्थितामनुद्बुद्धां कुण्डलिनीं समुद्बोध्य षट्चक्रभेदनपूर्वकं सुषुम्णानाडीपथेन प्रवाहितां कृत्वा ब्रह्मरन्ध्रोपरि सहस्रदलकमले विराजमाने परमशिवे लय एव लययोगस्योद्देश्यम् । एतदेव षट्चक्र-भेदनमुच्यते । लययोगस्यालौकिकरहस्यविज्ञानाय मन्त्रद्रष्टारः ऋषयो-प्युत्सुका आसन्, यस्य संकेतो योनिर्दिष्टमन्त्रावलोकनेनावगम्यते ।[1]

---

1. क्व त्री चक्रा त्रिवृतो रथस्य क्व त्रयो बन्धुरो ये सनीळाः ।
कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ।।
ऋग्वेद मं० १।सू ३४ मं०९

50

राजयोगिनो-

योगाभ्यासाय आसने विशेषं न ददति । हठयोगस्य सम्बन्धः स्थूलशरीरेण प्राणवायोः निग्रहेण चास्ति राजयोगस्य च मनसा सम्बन्धोऽस्ति । यत्र हठयोगस्याभ्यासःसमाप्तिं गच्छति तत्र राजयोगस्यारम्भो भवति । हठयोगी यदा प्राणवायु संयोज्य विभिन्नचक्रेषु नयति तदा सिद्धिर्भवति, किन्तु राजयोगिनं संयोगेन सिद्धय उपतिष्ठन्ते । राजयोगी मनोऽन्तःस्थतत्त्वानि सम्यग् ज्ञात्वा स्वरूपप्रतिष्ठः सन् अन्तरिन्द्रिये बहिरिन्द्रिये शरीरे चाधिकारं प्राप्य भगवदिच्छापूर्तौ सर्वाणि मन्त्राणि संनियोज्य मुक्तराज इव राजते । राजयोगस्य साधनाया उद्देश्यमस्ति आत्मनो रहस्योद्घाटनं तथान्तःप्रच्छन्नायाः शक्तेः उद्बोधः । राजयोगसिद्धान्तानुसारं येन मनो जितं तेन सर्वं कर्तुं शक्यते ।

तथा च मन्त्रयोगे मनसा कल्पितमूर्तिध्यानम् । हठयोगे मनसा कल्पितस्य स्थूलज्योतिषो ध्यानम् । लययोगे विशिष्टसाधनानि द्वारीकृत्य ज्योतिःस्वरूप बिन्दुध्यानम् । राजयोगे च प्रज्ञासमुत्पन्नया स्वध्यानं व्यवस्थापितवान् ।

हठयोगस्यादिः कोऽत्र आसीदिति निश्चेतुमतिकठिनमस्ति । भारतीयानामाचार्याणां सिद्धान्तोऽस्ति यत् सर्वस्यापि शास्त्रस्य प्रथमा प्रवृत्तिः परमेश्वरादेव जायते । अतः हठयोगोऽपि ईश्वरप्रोक्तः कथ्यते । हठयोगिनः कथयन्ति यद् आदिनाथो भगवान् शिव एव हठयोगस्यास्ति प्रवर्तकः। मत्स्येन्द्रनाथेन अद्भुतेन उपायेनेयं विद्या अधिगता । मत्स्येन्द्रनाथवद् गोरक्षनाथ-चर्पटीनाथ-जालन्धरनाथ-कनेरीनाथ-चतुरङ्गीनाथ विचारनाथप्रभृतिभिःनाथसम्प्रदायाचार्यैः हठयोगे निष्णातैर्भूत्वा जगत्ययं योगः प्रचारितः ।

मत्स्येन्द्रनाथात्पूर्वमपि हठयोग:प्रचलित आसीत् । श्रूयते यद् मार्कण्डेयोऽपि योगस्यास्य साधक आसीत् ।हठयोग:पूर्वं द्विधा आसीत् । एकस्य साधका: गोरक्षनाथादय: आसन्, द्वितीयस्य साधका आसन् मार्कण्डेयप्रभृतयो मुनय: ।[1]

गोरक्षनाथोपदिष्टस्य हठयोगस्य षड्ङ्गानि, तत्र यमनियमौ न गृह्यते, किन्तु मार्कण्डेयमुनि: अष्टाङ्गयोगस्य पक्षपाती आसीत् । हठयोगस्य पूर्णपरिणती राजयोग:। हठयोगस्य नियमितानुष्ठानेन राजयोग: सिध्यति । अत एवाचार्या हठयोगं राजयोगस्य सोपानत्वेन वर्णयन्ति । यदा संप्रज्ञातसमाध्युत्तरं ब्रह्माकारा स्थिति: समुदेति तदा परवैराग्यधारणया चित्तस्य सम्यक् निरोधनमावश्यकं जायते। एतेनेदं स्फुटीभवति यत् हठयोगेन स्वभावतो राजयोगो सिध्यति।

देहशुद्धि: योगिनां परिभाषानुसारं घटशुद्धिनाम्ना प्रथितास्ति । घेरण्डसंहितायामुक्तं यत् हठयोगशास्त्रोक्तै:धौति-वस्ति-नेति-त्राटक-नौलि-कपालभातिनामकै: षट्कर्मभि:देह:शुध्यति । वातपित्तकफेषु एकस्य द्वयोर्वा आधिक्ये षट्कर्म:साहाय्यमावश्यकम् ।

परं याज्ञवल्क्यप्रभृतय आचार्या: प्रवदन्ति यत् तदा केवलेन प्राणायामेन समस्ता मला:क्षाल्यन्ते तदा षट्कर्माणि नात्यन्तमावश्यकानि । इति योगविदो विद्वांस एव स्वानुभवेन विभावयन्तु म

---

1. द्विधा हठ: स्यादेकस्तु गोरक्षादिसुसाधितै: ।
अन्यो मृकण्डपुत्राद्यै: साधितो हठसंज्ञक: ॥प०प्रा०॥

## मार्कण्डेयपुराणे योगभेद चर्चा

मन्त्रयोगः, स्पर्शयोगः, भावयोग, अभावयोगः महायोगश्चेति पञ्चधा योगः कथितः। तत्र मन्त्रजपस्याभ्यासवशेन मन्त्रवाच्यार्थगोचरीभूता विक्षेपरहिता या मानसीवृत्तिःसा मन्त्रयोगः। प्राणायामयुक्ता सैव मनोवृत्तिः स्पर्शयोगः प्रोच्यते । स एव स्पर्शयोगरहितो भावयोगो निगद्यते । येन समस्तस्य विश्वस्य रूपमात्रावयवा विलीयन्ते सो भावयोगःप्रकीर्तितः, यतो हि तत्र विज्ञानस्यापि वस्तुनःआभासो न भवति । तत्र केवलं निरुपाधिकस्य शिवस्वभास्यैव चिन्तनं क्रिया सैव शिवमयी मनोवृत्ति र्महायोग उच्यते ।[1]

किन्त्वोमाखण्डे 5। अध्याये ज्ञानयोगःक्रियायोगो भक्तियोगश्चेति त्रयो योगा भगवत्या देव्या उपासनार्थं भोगमोक्षप्रदायकाः उपदिष्टाःसन्ति ।[2]

किन्तु यस्मिन् देशे नित्यं शिवयोगरतो मुनिःनिवसति, स देशःकियान् पवित्रतम इति वक्तुं न शक्यते । अतःसर्वं परित्यज्य सकलदुःखनिवृत्तये शिवयोगमभ्यसेत् । अपि च प्रसादयोगःपरमयोगो भक्तियोग इति त्रिविधो योगो पि प्रोक्तः।

---

1. मन्त्रयोगःस्पर्शयोगो भावयोगस्तथा परः ।
   अभावयोगः सर्वेभ्यो महायोगःपरो मतः ।। [मा०पु०37/6,7
2. ज्ञानयोगःक्रियायोगो भक्तियोगस्तथैव च ।
   त्रयो मार्गाःसमाख्याताःश्रीमातुर्मुक्तिभुक्तिदाः।।
   कर्मणा जायते भक्तिर्भक्त्या ज्ञानं प्रजायते ।।
   ज्ञानात् प्रजायते मुक्तिरिति शास्त्रेषु निश्चयः।।
   [मा०पु०51/10]

53

3. योगसिद्धिविमर्शः

पुराणानि सन्ति भारतीयसंस्कृतेः समस्तानां विधानान्च आकरः । तत्र स्थानेस्थाने यौगिकप्रक्रियाया योगसिद्धेश्चापि समुल्लेखो विद्यते । योगदर्शनस्य प्रायः सर्वे विषयाः सन्ति प्रायोगिकाः। अतो दर्शनमिदं सर्वदैव आस्तिक नास्तिकैः समानं समाद्रियते ।योगस्यावान्तरविषयेषु स्यान्नाम केषाञ्चिद् विदुषां विचारवैविध्यम् परं क्रियांशानां प्रयोगे न कस्याप्यस्ति काचिद् विमतिः ।

यमनियमादिभिः शुद्धान्तःकरणः तत्तद्धारणया प्राप्तसिद्धिः योगी सर्वं कर्तुं शक्नोति । ऐन्द्रजालिकक्रियासु प्रायःदृक्शक्तिस्तम्भनप्रक्रिया दृश्यते । इन्द्रजालक्रियाप्रदर्शको नैकसंयोगवियोगरूपिणीं क्रियां प्रदर्शयन् इन्द्रजालविद्यया दर्शकानां दर्शनानि स्तम्भयति येन द्रष्टारः तस्य तत्तत्पदार्थसंयोगवियोगकार्यकलापं ज्ञातुमसमर्था भवन्ति ।

सिद्धिर्द्विविधा परा अपरा च । तत्र विषयसंबन्धिन्यः अपरा सिद्धयो मुमुक्षुभिर्योगिभिः हेया । स्वस्वरूपानुभवोपयोगिनी परा सिद्धिः । तत्र परासिद्धि तदुपयोगिन्य एव सिद्धयो योगिभिरुपादेयाः, हेयाश्च विषयसंबन्धिन्य अपराः सिद्धयः। यदि साधकःतीव्रवैराग्ययुक्तः मनसः सुदृढतया योगेश्वर्येभ्यो मुखं परावर्तयन् तत्र न मुह्यति तर्हि शान्तिमये तत्स्थानं प्राप्नोति, यत्र गमनेन निखिला अपि मनोवासना पूर्णतामापद्यन्ते । सत्त्वगुणप्रभावेण रजस्तमोयते अपसारिते अन्तःकरणे च निर्मलतामुपगते ऋतम्भराख्या पूर्णज्ञानमयी बुद्धिरुदयते । मलमलीमसे न्तःकरणे भगवत्साक्षात्कारो न संभवति ,अपि तु मलरहितं निर्मलमन्तःकरणं भगवद्दर्शनाय समर्थ भवति ।

साधनवैराग्याभ्यां पक्षाभ्यामुड्डीयमानःसाधको हंसः आत्मदर्शनसामर्थ्यं लभमानः तीव्रवैराग्योदयाद् विविधे चाकचिक्ये ग्रस्तो न भवति, अपि तु शनैः शनैः भगवद्दर्शनाधिकारी भवन् परं कल्याणस्वरूपं कैवल्यपदमासादयति । यदा सत्त्वगुणस्य प्रकर्षवशाद् रजस्तमसो र्मलं पूर्णरूपेणापसर्पति तदा पुरुषः स्वकीयं यथार्थस्वरूपमधिगच्छति । यथैको ऽग्निस्फुलिङ्गो नेकानग्निस्फुलिङ्गानुत्पादयति तथैव योगबलेन एकमन्तःकरणमनेकत्वं प्रतिपद्यते । महत्तत्त्वमधिगच्छन् योगी यथेच्छमनेकानि अन्तःकरणानि स्रष्टुमर्हति । योगसाधनेन स्वस्वरूपज्ञानमधिगतवता आत्मज्ञानिना योगिना सिद्धयःस्वत एव प्राप्यन्ते । यद्यपि स्वरूपोपलब्धौ सत्यां साधकःप्रकृतिलीलया न पुनर्ग्रस्यते, परन्तु व्युत्थानदशाजनितासु सिद्धिषु समाकृष्टःसन् जडभरतवद् विपन्नो भवितुमर्हति । अतो मुमुक्षुभिः सिद्धयो हेया एव ।

योगशास्त्रे साधकः त्रिविधो ऽभिमतः ,अधमो मध्यमः,उत्तमश्च। तत्र साधनपथे अग्रेसरन् सिद्धियोगी साधको ऽधमो निगद्यते । सिद्धीरवलोकयन्नो ऽपि तद्भोगपराङ्मुखो मध्यमः ।यस्तु न कथञ्चित् सिद्धिमीक्षते नापि समीहते स उत्तमः । अतःपरवैराग्यसनाथ उत्तमसाधक एव कैवल्यस्य सर्वथा अधिकारी, तेनैव च त्वरितं कैवल्यमासाद्यते ।

यथावद् योगसाधनानुष्ठानेन ज्ञानोदये योगिनामन्तःकरणतो निखिलःसन्देहो दूरीभवति । अतो योगिना यथेच्छं सर्वेषां वस्तूनां यथार्थज्ञानं जायते । योगी यत्रैव स्वीयां ज्ञानदृष्टिं प्रसारयति तत्रैव तस्य बुद्धिः देशकालपरिच्छेदरहिता अभ्रान्ता सती प्रयाति,तया च तत्र त्रिकालदर्शित्वमुपपद्यते ।

155

यदा साधक: मन: प्राणमिन्द्रियाणि च वशे कृत्वा स्वकीयं चित्तं परमात्मनि नियोजयति तदा ईश्वरं भावयतस्तस्य समक्षं बह्व्य: सिद्धय उपतिष्ठन्ते ।[1]

मार्कण्डेयपुराणे सलक्षणम् अष्टसिद्धीनामुल्लेख: कृतो स्ति ।[2]

तत्र अणिमा-स्वेच्छया शरीरस्य अणुत्वसम्पादनं येनातिसूक्ष्मत्वात् जलवत् शिलायामपि अन्त:प्रवेष्टुं प्रभवति साधक: ।

लघिमा:-स्थूलस्यापि शरीरस्य लघुत्वसम्पादनम्, येन तरणिकिरणमालम्ब्य सूर्यलोकं प्रयाति योगी ।

गरिमा- देहस्य यथेच्छं गुरुत्वसम्पादनम् ।

महिमा- सर्वतो महान् भवति ।

प्राप्ति:- स्वेच्छया सर्वपदार्थाधिगति: । यत:पाणिमलत्वेन भूतलस्य एव योगी शशिनं स्पृशति ।

प्राकाम्यम्- इच्छानभिघात:येनेलायाम् (पृथिव्याम्) उन्मज्जति निमज्जति च यथा पयसि ।

ईशित्वम्-सर्वेषां भौतिकपदार्थानामुत्पत्तिस्थितिलयविधायिनी शक्ति:, यथा सर्वभूतोत्पत्ति-स्थिति-लयेशो भवति योगी। एतया सिद्धया योगिनो नूतनां सृष्टिमपि कर्तुं प्रभवन्ति ।

---

1. जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिन: ।
मयि धारयतश्चेत उपतिष्ठन्ति सिद्धय: ॥
(श्रीमद्भागवते 11/15/1)

2. अणिमा लघिमा चैव महिमा प्राप्तिरेव च ।
प्राकाम्यं चतथेशित्वं वशित्वं च तथा परम् ॥
यत्र कामावशायित्वं गुणानेतांस्तथेश्वरान् ।
प्राप्नोत्यष्टौ नरव्याघ्रपरं निर्वाणसूचकान् ॥
(मा०पु० 37/30-31)

वशित्वम्-पञ्चानां भूतानां स्ववशीकारो येन भूतभौतिकं सकलं वस्तुजातं भवति । एतया सिद्धया योगिनः स्वयं कस्यापि वशे अविद्यमाना अपि सर्वान् स्ववशे कुर्वन्ति । पञ्चभूतैः यथेच्छं कार्याणि च कारयितुं प्रभवन्ति ।

सिद्धीरेताःसमुपलभ्य योगिभिः सर्वं कर्तुं शक्यते । पाषाणे प्रवेष्टुं पार्यते । आवरणरहिते वियत्यपि तिरोहितेन भूयते, पञ्चापि भूतानि योगिनां क्लेशदानि न भवन्ति, योगी शिलायां प्रवेष्टुमर्हति, जलं समार्द्रं कर्तुं न शक्नोति । पावकः तदीयं शरीरं न दहति, न च वायुः शुष्कं कर्तुमर्हति । इमा अष्टौ सिद्धय ईश्वरीयाःसन्ति । एताभि योगिन ईश्वरस्वरूपतां प्रतिपद्यन्ते । ईश्वरानुकम्पया एवैताःसमधिगम्यन्ते ।

---

1. सूक्ष्मात् सूक्ष्मतमो णीयाञ्छीघ्रत्वं लघिमा गुणः ।
   महिमाशेषपूज्यत्वात् प्राप्तिर्नाप्राप्यमस्य यत् ॥
   प्राकाम्यमस्य व्यापित्वादीशित्वं चेश्वरो यतः ।
   वशित्वाद् वशिमा नाम योगिनः सप्तमो गुणः ॥

   यत्रेच्छा स्थानमप्युक्तं च कामावशायिता ।
   ऐश्वर्यकारणैरेभिर्योगिनःप्रोक्तमष्टधा ॥

157

## योगविघ्ना: तदुच्छेदोपायाश्च

योगमभ्यस्यतो योगिनो नैके विघ्ना उपतिष्ठन्ते, ये योगसिद्धि: तान् प्रत्यावर्त्यन्ति । अत: तदुच्छित्तये योगिभिरवश्यं प्रयत्नो विधेय: ।

मार्कण्डेयपुराणे लिखितमस्ति यद् योगिनां योगसाधने कटुकोदया: प्रातिभ-श्रावण दैवभ्रमावर्ताख्या पञ्चोपसर्गा विघ्नकारका: प्रवर्तन्ते ।[1] यदा योगिनो वेदकाव्यादिशास्त्राणामर्था: सर्वविद्याया: शिल्पकलायाश्च ज्ञानमुदीयात् तदा प्रतिभासम्बन्धात् प्रातिभ उपसर्ग: कथ्यते । यदा योगी अखिलान् शब्दानर्थांश्च जानीयात् तदा तस्य श्रावण उपसर्ग उपस्थितो बोद्धव्य:। यदा तोयस्यावर्त इव ज्ञानावर्तो योगिनां चित्तं व्याकुलयेत्तदा आवर्ताख्य उपसर्ग उपस्थितो ज्ञेय।[2] यदा योगी देवतावत् सर्वासु दिक्षु वीक्षेत तदा दैव उपसर्गो ज्ञेय:। यदा योगिनो मन: दोषेण निरालम्बं सत् सर्वत्र भ्रमेत् समस्ताचारविभ्रम: स्यात्तदा भ्रमनामक उपसर्गो ज्ञेय:। एभि: योगविघ्नकरै: पञ्चभि: उपसर्गै: भ्रष्टो योगी भूयो भूयो योनिषु आवर्तते । अत: सावधानेन योगिना ज्ञानद्वारा ब्रह्मणि चित्तं सन्धाय परमं ब्रह्मचिन्तयेत् ।

---

1. पञ्चैते योगिनां योगविघ्नाय कटुकोदया: ।
   वेदार्था: काव्यशास्त्रार्था विद्याशिल्पान्यशेषत: ।।
   [मा०पु०37/8]
2. योगिन: संप्रवर्तन्ते सात्त्वराजसतामसा: ।
   प्रातिभ: श्रावणो दैवो भ्रमावर्तो तथा परौ ।।
   [मा०पु०37/7]
3. सूक्ष्मास्तु धारणा: सप्तभूराद्या मूर्ध्नि धारयेत् ।
   धरित्रीं धारयेद् योगी तत् सौक्ष्म्यं प्रतिपद्यते ।।
   
   [मा०पु०37/17]

## 5· योगाधिकारिण:

मार्कण्डेयपुराणे योगाधिकारिनिरूपणप्रसंगे लिखितमस्ति यद् दृष्टेभ्य: श्रुतेभ्यश्च लौकिकपारलौकिकविषयेभ्यो यस्य मनो विरक्तं स्यात् स एव वास्तविको योगाधिकारी, नान्य:।[1] लौकिकपारलौकिक विषयेषु दोषदर्शनात् सततमीश्वरगुणचिन्तानाच्च मनो विषयेभ्यो विरक्तं भवति ।

अतितृप्त: क्षुधार्त: मलमूत्रवेगबाधित:, मार्गगमनादिना श्रान्त:चिन्तार्तश्च योगी योगं न युञ्जीत ।[2]

## 6· योगिनाम् आहारश्च

साधारणबुद्धिभि: योग:परमदुर्लभ:प्रोक्त:। ये अयाच्यानि न याचन्ते, शरणागतान् रक्षन्ति, कृपणान् नावजानन्ति ,धनोष्मणा न माद्यन्ते, युक्ताहारविहारा:,कर्मसु युक्तचेष्टा:,ध्यानपरायणा:, अनार्यकथाविरता:,आलस्यरहिता:,सम्मानाकाङ्क्षिण:,गोष्ठीषु अनिरताश्च ते योगसिद्धिं प्राप्तुं समर्था भवन्ति, यतो हि योगो भुवि परमदुर्लभो ऽस्ति । अत एभि: गुणै:हीनस्य पुंसो योगप्राप्ति: सुदुर्लभा । एवं च ये प्रशान्तमनसो जितक्रोधा मानाहङ्कारवर्जिता: सन्ति, त एव यतव्रता वस्तुतो योगस्य कल्याणभाजनानि सन्ति।

---

1· दृष्टे तथानुश्रविके विरक्तं विषये मन: ।
तस्य तस्याधिकारो ऽस्ति योगे नान्यस्य कस्यचित् ।। [मा०पु०38/12]

2· नातितृप्त:क्षुधार्तो न न विण्मूत्रप्रबाधित: ।
नाऽध्वखिन्नो न चिन्तार्तो योगं युञ्जीत योगवित् ।।



[मा०पु० 40/[illegible]]

159

ये ध्यानाध्ययनसंलग्ना योगमार्गे प्रवर्तन्ते ते वस्तुतः शान्तिं लभन्ते अतो योगधर्मावलम्बनमवश्यं विधेयम् । योगतो न्यद् सर्वधर्माणां वरिष्ठं साधनं नास्ति ।

## योगिनामाहार:

यो मनुष्यो यादृशमाहारं करोति तस्य तादृशमेवान्त:करणं भवति । अन्त:करणानुरूपैव श्रद्धापि तस्य समुत्पद्यते । श्रद्धानुरूपा च निष्ठा भवति । आहारशुद्धौ तत्परिणामस्वरूपमन्त:करणमपि शुद्धं भवति । अत एवोक्तं छान्दोग्योपनिषदि "आहारशुद्धौ सत्त्वशुद्धि:" अन्त:करणशुद्धौ विचाराभावा गुणा:क्रिया: श्रद्धादयश्च शुद्धा भवन्ति। अतो नित्यशुद्धबुद्धमुक्तसत्यस्वरूपस्य परमात्मन: प्राप्तये योगिनामपि अन्त:करणमत्यन्तं शुद्धमपेक्ष्यते । अतो न्त:करणशुद्धये योगिनां सात्त्विका आहारा नितान्तमावश्यका:सन्ति ।

मार्कण्डेयपुराणे उल्लिखितमस्ति यद् यवागु:तक्रं पय: यावकं फलं मूलं प्रियङ्‌गु: कणपिण्या कसक्तव एते शुभाहारा योगिनां सिद्धकारका:सन्ति ।[1] किन्तु व्यस्ते विधूमे व्यङ्‌गारे सर्वस्मिन् जने सुप्ते योगी प्रतिदिनं भिक्षार्थमटेत् । परन्तु प्रतिदिनमेकस्मिन् गृहे एव न भिक्षेत् । सतां धर्मं अदूषयन् योगी एवं व्यवहरेत् येन सर्वत्र

---

1. भैक्ष्यं यवागू: तक्रं वा पयो यावकमेव वा ।
फलं मूलं प्रियंगु वा कणपिण्याकसक्तव: ।।
[मा० पु० 38/11]

तस्य सम्मानं स्यात् क्वचिदपि तिरस्कारो न भवेत् । सद्गृहस्थेषु यायावरेषु भैक्ष्यं चरेत्, एषा श्रेष्ठा भिक्षावृत्तिः उत्तमा प्रोक्ता। अतः शालीनेषु गृहस्थेषु श्रद्दधानेषु दान्तेषु श्रोत्रियेषु महत्सु एव नित्यं भिक्षाचर्यं कर्तव्यम् । अथ अदीक्षितानामपतितानां च गृहे भिक्षार्थं गन्तव्यम् ,परन्तु हीनवर्णेषु भिक्षावृत्तिः जघन्या प्रोच्यते ।

---

1. अत ऊर्ध्वं पुनश्चापि अदुष्टापतितेषु च ।
भैक्ष्यचर्या विवर्णेषु जघन्या वृत्तिरिष्यते ।।
(मा०पु० 38/10)



162

सप्तमो ऽध्यायः
xxxxxxxxxxxx

यम - नियमौ
============

योगाङ्गेषु प्रथमो यमः द्वितीयो नियमः। तत्र यमनियमयोः सदाचारसम्बन्धिनां नियमानां समावेशो ऽस्ति। परवर्तिनां साधनानामभ्यासाय यमनियमयोः पालनमत्यावश्यकमस्ति। ईशा-बुद्ध-प्रभृतीनामन्यधर्माचार्याणामपि प्रधानेषूद्देशेषु मूलसिद्धान्तेष्वपि यमनियमयोः समावेश आवश्यको विद्यते। यमे अहिंसासत्यास्तेय ब्रह्मचर्यपरिग्रहाणां नियमे शौच सन्तोष तपः-स्वाध्यायेश्वर-प्रणिधानानां समावेशो ऽस्ति।

यमादिभिः अन्तःकरणं स्वच्छं भवति, ततः श्रद्धा जायते, तथा साधने तत्परता भवति। ततो मनसः इन्द्रियाणां च निरोधे सति परमात्मनः सम्यग्ध्यानं सम्भवति, ततः परमात्मतत्त्वस्य यथार्थं ज्ञानं जायते तेन परमा शान्तिर्भवति।

समाधिसिद्धये यमानां नियमानाञ्च पालनमत्यावश्यकमस्ति। यमनियमपालनं विना ध्यानसमाधिसिद्धिः कठिना ऽस्ति। प्राणायामसाधकैरपि यमादीनां पालनमत्यावश्यकं भवति।

यमस्यानुष्ठानेन साधकःयोगस्य प्रथमाधिकारं लभते। नियमानुष्ठानेन च साधकःशुद्धचित्तः सन् योगस्य समुन्नताधिकारमधिगच्छति।

163

मार्कण्डेयपुराणे अहिंसासत्यमस्तेयं ब्रह्मचर्यमपरिग्रह:
अक्रोधो नसूया चेति संक्षेपत: सप्त यमा: प्रोक्ता:। धर्माधर्मविवेकत: यथार्थकथनं सत्यम्, चौर्येण बलेन वा परस्वहरणं स्तेयं तद्विपर्ययमस्तेयम्, सर्वथा मैथुनत्यागो ब्रह्मचर्यं प्रकीर्त्यते । ब्रह्मचर्यपरित्यागात् ज्ञानवानपि पातकी भवति । य: सर्वसङ्गपरित्यागी सन्नपि मैथुने प्रवर्तते स चाण्डालवत् सर्ववर्णबहिष्कृतो बोद्धव्य: ।

यो योगमार्गे प्रवृत्तो पि विषयेषु स्पृहावान् भवति । तत्संभाषणमात्रेणापि ब्रह्महत्या भवति । सर्वसङ्गं त्यक्त्वापि यदि पुन: सङ्गीभवति तर्हि तत्सङ्गसङ्गिनां संसर्गेणापि महापातकस्य दोषो भवति । आपत्तावपि परद्रव्यस्यानादानपरिग्रह उच्यते । स च योगे सिद्धिकारको भवति । धर्मशा आत्मन: समुत्कर्षाय, अतिनिष्ठुरभाषणं क्रोधं कथयन्ति । तद्विपर्ययो क्रोध: । अन्यं धनादिना आत्मनो धिकं दृष्ट्वा मनसि सन्तापनमसूया तदभावो नसूया तप: स्वाध्याय: सन्तोष:शौचं हरिपूजनं सन्ध्योपासनं च यत्र मुख्यमस्ति स नियम: । तत्र यत्र चान्द्रायणादिभि:शरीरस्य शोषणं भवति तत्तप उच्यते । एतच्च योगस्योत्तमं साधनमस्ति ।

ऊंकारस्य उपनिषदां द्वादशाक्षरस्य अष्टाक्षरमन्त्रस्य तत्त्वमस्यादिवाक्यानां च जप:स्वाध्याय: कथ्यते । य: स्वाध्यायं त्यजति स मूढ:। तस्य योगो न सिध्यति । योगं विनापि केवलेन स्वाध्यायेन मनुष्याणां पापं नश्यति, यतो हि स्वाध्यायै: तोष्यमाणा

---

1• अकारश्च तथोकारो मकारश्चाक्षरत्रयम् ।
एतास्तिस्र:स्मृतामात्रा:सात्त्वराजसतामसा:।।
[मा०पु० 39/4]

देवाः प्रसीदन्ति । वाचिकोपांशुमानसभेदात् जपस्त्रिविधोऽस्ति । तत्र स्पष्टरूपेण, अक्षराणां पदानां चोच्चारणपूर्वकं मन्त्राणां पाठो वाचिको जपः। मन्त्रस्योच्चारणे शुद्धाशुद्धविवेकः उपांशुः जपः। अयं पूर्वस्माद् द्विगुणोऽधिकः फलदः । अक्षरश्रेणीं विधाय तत्तदर्थ-विचारणं मानसो जपः । जपेन नित्यं स्तूयमाना देवता संप्रसीदति । अतः स्वाध्यायसम्पन्नस्य पुंसः सकला मनोरथाः सिध्यन्ति ।

यदृच्छालाभसन्तुष्टिः सन्तोषः कथ्यते । सन्तोषहीनो मानवः कुत्रापि सुखं न लभते । कामानामुपभोगेन कामः कदापि न शाम्यति । इतोऽधिकं कदा लप्स्ये इत्येवं कामनाजालस्तु वर्धते एव ।अतः शरीरशोककारणं कामनाजालं त्यक्त्वा यदृच्छालाभसन्तुष्टः सन् धर्मपरायणो भवेत् । बाह्याभ्यन्तरभेदेन शौचं द्विविधं प्रोक्तम्। तत्र मृज्जलाभ्यां बहिः शुद्धिः, भावशुद्धिः, आभ्यन्तरशुद्धिः। अन्तःशुद्धिविहीना यथा भस्मनि हुतं हव्यमिव फलं न ददति ,किन्तु व्यर्थीभवन्ति । भावशुद्धिविहीनानां यथा भस्मनि हुतं हव्यमिव फलं न ददति, किन्तु व्यर्थीभवन्ति । भावशुद्धिविहीनानां समस्तं कर्म निष्फलं भवति । अतो रागादिकं सर्वं त्यक्त्वा सुखी भवेत् । गङ्गा-भारमृत्तिकया कोटिघट-जलेन वा कृतशौचोऽपि दूषितान्तःकरणाः पुरुषाः चाण्डालवत् सन्ति । देवपूजापरायणोऽपि अशुद्धान्तःकरणः पूजाफलं न लभते, अपितु देवांस्तन्नरके पातयन्ति ।

योऽन्तःशुद्धिविहीनः, स बहिः शुद्धिं करोति बहिरलङ्कृतः सुराभाण्डवदपवित्रोऽस्ति स शान्तिं न लभते । यथा

पूलसमा अपि आपगा सुराभाण्डं न पवित्र यति तथैवापवित्रमानसा ये तीर्थयात्रां कुर्वन्ति तानि तीर्थानि न तां पावयन्ति । यो वाचा धर्म प्रवदति मनसा च नाभिगच्छति, स महापातकी ज्ञातव्य:। ये विशुद्धमानसा: साधारणमपि धर्ममाचरन्ति, तेन ते: अक्षयं फलं लभ्यते । मनसा वाचा कर्मणा स्तुत्या श्रवणेन पूजनेन च हरिभक्तो दृढ: तिष्ठति तस्य सा पूजा हरिपूजेत्युच्यते । एभिर्यमनियमै: विशुद्धमनसां पुंसां मोक्षो हस्तगतो भवति ।

## आसनविमर्श:

उपासना कस्मिंश्चिदासने उपविश्य कर्तुमुचिता ।यतस्त-त्रैकप्रत्ययप्रवाहो भवति । न सा गच्छतो धावतो वा पुनस्तस्य सम्भवति । गत्याचेतसि विक्षेपसम्भवात्, तिष्ठतो देहधारणे मनस: सूक्ष्मवस्तुनि निरीक्षणाक्षमत्वाच्च, उपासना न सम्यग् भवितुमर्हति। एवं शयानस्य निद्रासम्भव:, किन्तु आसीन: साधक: एवंविधान् अनेकान् दोषान् दूरीकर्तुं प्रभवति । अत आसीनस्योपासना सम्यक् सम्भवति । अत एव भगवान्[1] वादरायणो वेदान्तदर्शने सूत्रयाम्बभूवन्आसीन: सम्भवात् ।

स्वस्वरूपे चिन्मात्रे चेतस: स्थापनार्थमासनस्य विधानमस्ति तदर्थं स्वस्तिकादिषु किमप्येकमासनं स्वसौकर्यानुकूलं गुरुतो विज्ञाय

---

1. ब्र० सू० 4/1/7

कर्तव्यम् । तत्र सावधानतया स्थैर्यं स्वलक्ष्यं विहाय नान्यत्र मनो नेयम् ।

शरीरस्य तदवयवानां च स्थिरीकरणमासनं कथ्यते । विशेषप्राणायामैः सहानुष्ठितेनासनेन नाडीचक्रे तथा शरीराभ्यन्तरे विभिन्नेषु अङ्गेषु च प्रसुप्ताः शक्तयो जागृता भवन्ति । योगस्य सर्वोच्चादर्शप्राप्त्यै स्वस्थं सुदृढं बलिष्ठं च शरीरमस्ति अत्यावश्यकम् शरीररुग्णाः साधकाः स्वीयं चित्तमेकाग्रं कर्तुं न प्रभवन्ति, नापि उच्चतरस्तरेषु ध्यानं स्थिरी कर्तुं शक्नुवन्ति । अतो योगसाधनस्य प्रारम्भिकासु अवस्थासु साधकैः कियन्ति आसनानि अवश्यमनुष्ठेयानि, यैः शरीरं स्वस्थं चित्तं सुस्थिरं च तिष्ठेत् ।

श्रूयते 84 लक्षाणि आसनानि सदाशिवेन प्रोक्तानि सन्ति, किन्तु कालक्रमात्तथा अनभ्यासादिभिः कारणैः तानि लुप्तानि साम्प्रतं केवलं 84 आसनानि प्रचलितानि सन्ति । एकैकस्मिन्नासने अनेके गुणाः सन्ति । एकैकमपि आसनमनेकप्रकारैः क्रियते । प्राक्तनैः ऋषिभिः आसनसिद्ध्या सर्वाः सिद्धयः प्राप्ताः । आसने समारूढा योगिनः ईश्वरचिन्तने तल्लीना भवन्ति । योगस्य सर्वेषु ग्रन्थेषु सर्वेषां लोकोत्तरो महिमा गीतः वर्तते ।

सर्वेषु आसनेषु विभिन्ना गुणाः सन्ति तथा सर्वाणि अपि बल-विभूति-विद्या-दीर्घजीवन-सत्त्वोदयकारकाणि सन्ति । एषां यथाक्रमभ्यासेन भूतास्तथा मानवा अपि देवा भवितुमर्हन्ति । सैव आरोग्यतावृद्धिः, आयुष्यवृद्धिः, ईश्वरानुरागवृद्धिश्च जायते । आसनैः सह मुद्रा प्राणायामा अपि क्रियन्ते यैरेषां पूर्णता भवन्ति।

योगग्रन्थावलोकनेन सद्गुरोरुपदेशेन च क्रियमाणानि आसनानि फलदानि भवन्ति । आसनसिद्धया शीतोष्णादिद्वन्द्वानां प्रतिकूल: सम्बन्धो न भवति । शरीरस्यारोग्यं भवति देहलाघवता च प्रतीयते ।

आसनेषु पद्मासनमधिकं मान्यमस्ति । अस्याभ्यासेन सर्वमभीष्टं सिध्यति । अस्यानुष्ठाने न्यूनतायां वैपरीत्ये वा न किञ्चिदनिष्टं सम्भाव्यते । अन्येषु आसनेषु वैपरीत्ये प्राणसंकटस्यापि दुष्परिणाम:सम्भवति । अत: पद्मासनं सर्वोत्तमं निगद्यते ।

आसनस्य विधिवद्भ्यासेन देहस्य स्थिरता,लघुता च सम्पद्यते । आसनाभ्यासेन रजोगुणजनिता देहस्य चञ्चलता मनसश्चा-स्थिरता दूरी भवति । रोगो विक्षेपस्य प्रधानमेकं कारणमस्ति । स चासनाभ्यासेन निवर्तते । तमोगुणक्रियाया समुत्पन्ना देहस्य गुरुता दूरी भवति । देहे सात्त्विकतेजसो वृद्ध्या तमोगुणो ह्रसति, स्वभावतश्च देहो लघुतामापद्यते, । योगाभ्यासेन स्थिरीकृते आसने प्राणायामक्रिया योगिनांकृते सहजसाध्या भवति ।

आसनाभ्यासेन मनस एकाग्रता प्राणतत्त्वस्योर्ध्वगमनं बहुविधानां शारीरिकरोगाणां निवृत्तिश्च भवति । विभिन्नैरासनै: विभिन्ना: परिणामा भवन्ति । साधकस्य प्रकृत्यनुकूलमासनं हितकरं भवति । मुख्यानामासनानामभ्यास: सर्वदा क्रियते, परन्तु गौणानि आसनानि तु विशेषावधिपर्यन्तमेव क्रियन्ते । आसनाभ्यासे दृढताया नियमनिष्ठतायाश्च पालनमावश्यकं भवति ।

आसनेन स्वास्थ्यस्य रक्षा व्याधिनाशश्च जायते । परन्त्वत्र शरीरविज्ञानस्यानुभवः पूर्वमावश्यको ऽस्ति । अतो गुणिनो गुरोः साहाय्येनाभ्यासो विधेयः, नो चेद् व्याध्यादीनामस्ति सम्भवः । आसनसिद्धिमन्तरा प्राणायामो ऽपि न सम्यक् सम्भवति । अतः प्राणायामसिद्धये पूर्वमासनसिद्धिरावश्यकी ।

आसनस्याभ्यासेन सर्वप्रकारको द्वन्द्वो भिनत्ति । अर्थात् शीतोष्ण क्षुत्तृष्णा-रागद्वेषप्रभृतयो द्वन्द्वा योगसाधने बाधां नोपस्थापयितुं प्रभवन्ति । आसनस्य मुख्यमुद्देश्यं मेरुदण्डस्योन्नतीकरणम् । यतो हि तस्याभ्यन्तरे सुषुम्णा नाडी वर्तते, यस्या मध्ये क्रमशो ब्रह्माणी- चित्रणी-ब्रह्मनाड्यो विद्यन्ते । आसन-मुद्रा-ध्यानद्वारा कुण्डलिनी प्रबुद्धा सती ब्रह्मनाड्यभ्यन्तरे षट्चक्रस्य भेदनं कुर्वन्ती ब्रह्मरन्ध्रमुपतिष्ठते । तत्र परात्परतरेण ब्रह्मणा शिवेन मिलित्वा लयं गच्छति साधकश्च समाधिस्थो भवति । यदि साधनासमये मेरुदण्डं वक्रं तिष्ठेत्तर्हि क्रियायाः सिद्धौ सम्भावना न भवति, नापि ज्ञानं प्राप्तुं शक्यते, प्रत्युत विविधा व्याधयः सम्भवन्ति । अत आसनसिद्धेरत्यावश्यकत्वमुक्तमस्ति ।

यथोपवेशनप्रक्रियया शारीरिकं सुखं मनसः स्थैर्यमात्मनः प्रसादश्च समधिगम्यते सैव आसनशब्दवाच्या । एकस्यामवस्थायां सातत्येन न सुखमनुभूयते । अत एवासौ शयनोत्थानोपवेशनेषु सदैव परिवर्तनमनुतिष्ठति । शरीरवान्स्वल्पान्तरो ऽपि चाञ्चल्यमभ्युपैति। अतिसूक्ष्मकालदर्शिभिः महर्षिभिः अनेका उपवेशनपद्धतयो निर्दिष्टाः,

याभिरभ्यस्ताभिः शनैः शनैः शरीरं मनश्च शान्तिमासादयतः । शान्तं मनश्च योगसाधनोपयोगितामापद्यते ।

योगशास्त्राचार्यैः बहुविधानि आसनानि तत्र तत्स्थलानि न्यपि समुपवर्णितानि । चतुर्विधयोगसाधनेषु हठयोगाचार्यैः चतुरशीति-संख्याकानि आसनानि निर्दिष्टानि । लययोगनिष्णातैस्तु केवलं चत्वार्येव आसनानि अङ्गीकृतानि ।

आसनाभ्यासेन मनःशरीरयोः स्थिरतया समस्ता योगप्रत्यूहा निरस्यन्ते । आसनसिद्धौ लब्धायां शरीरे स्थिरता-मुपेयुषि मनसि चञ्चलताप्यपगच्छति तत्र च शीतोष्णादिद्वन्द्वप्रभावो न भवति । सिद्धासनो योगी अनायासेनाभ्यासपथे प्रसरन् द्वन्द्वाघाततो विनिवृत्त्या शीघ्रमेव योगस्य लक्ष्यं परमात्मानं लभते ।

स्थूलं शरीरमेतत् सूक्ष्मशरीरस्यैव विस्तारमात्रम् । स्थूल-शरीरचाञ्चल्येन तन्मूलभूतं सूक्ष्मशरीरमपि चाञ्चल्यमुपनीयते ।केनापि प्रक्रियाविशेषेण स्थूले शरीरे सुखीक्रियमाणे मनस्यपि जायते सुखोदय इत्यत्र नास्ति काचित् संशीतिः ।

सुखपूर्वकं स्थैर्योपदेशनं नाम आसनम् । सर्वेषु आसनेषु मेरुदण्ड-मस्तक-ग्रीवाणामुन्नतीकरणं नासिकाग्रे भ्रूमध्ये वा दृष्टि-दानमत्यावश्यकम् । यो दीर्घकालं येनासनेन सुखपूर्वकं स्थातुं शक्नोति तदर्थं तदेवासनमुपयुक्तमस्ति । यद्यपि योगिनां कृते बहुविधानि आसनानि उक्तानि तथापि अत्यन्तोपयोगित्वात्तेषु पद्मासनं

स्वस्तिकासनं सिद्धासनं चान्यन्तं प्रसिद्धानि सन्ति । तेषां लक्षणं च योगशास्त्रे द्रष्टव्यम् ।

मार्कण्डेयपुराणे पद्मासनमर्धासनं स्वस्तिकासनञ्चेति[1] त्रीणि आसनानि तेषां लक्षणानि च कृतानि सन्ति ।

## प्राणायामः प्रत्याहारश्च

प्राणवायोः स्थैर्यकरणं प्राणायामः कथ्यते ।[2] स च चतुर्विधो भवति - रेचक-पूरक-कुम्भक-केवलकुम्भकभेदात् । तत्र कुक्षिस्थवायोर्बहिः निःसारणं रेचकः, बाह्यं वायुमाकृष्य देहाभ्यन्तरे वस्थापनं पूरकः उभयगतिनिरोधः कुम्भकः, सर्वेषां मेलकं केवलकुम्भकं च प्रोच्यते । तत्र द्वादश-षोडश-द्वात्रिंशद्-चतुःषष्ठी मात्राभिः पूरकादयो भवन्ति। तथा च त्रिभिः रेचक-कुम्भक-पूरकैः शनैः शनैः प्राणवायोः आधिपत्यं स्थापनं प्राणायामः। मनसा वायोः साक्षात् सम्बन्धः, अत एव प्राणवायौ वशीभूते मनः स्वयमेव वशीभवति ।

प्राणायामः श्वासानां व्यायामो स्ति । आलस्यं मूढता-शारीरिकदौर्बल्यादयो विना विशेषप्राणायामैः दूरीभवन्ति ।योग-साधनायां प्राणायामस्य विशिष्टं स्थानमस्ति । शारीरिकदृष्ट्या प्राक्तना योगिनः प्राणायामस्य पर्याप्तं महत्त्वं प्रोक्तवन्तः ।

---

1. पद्ममर्धासनं चापि तथा स्वस्तिकमासनम् ।
   आस्थाय योगं युञ्जीत कृत्वा च प्रणवं हृदि ।।
   [मा०पु० 36/28]

2. प्राणानामुपसंरोधात् प्राणायाम इति स्मृतः ।
   [मा० पु० 36/40]

प्राणायामकर्तॄणां शरीरस्य स्वास्थ्याय मलशोधकक्रियाणामावश्यकतैव भवति । प्राणायामै: शरीरं तेजस्वि भवति, मानसिकसमता च प्राणायामै: सहायको भवन्ति । मनोविकारा मानसिकशक्तिभङ्गस्य प्रबला: सन्ति हेतव: । प्राणायामसाधका: मनोविकारान् दूरीकृत्य मानसिकीं समतां स्थापयितुं समर्था भवन्ति । अतो मनोविकारान् दमयितुं मानसिक-शारीरिक-समताप्राप्त्यै च प्राणायामो महानस्ति साधक: ।

प्राणायामस्य कौशलपूर्णप्रक्रियानुष्ठानेन प्राणायामक्रियागतिविच्छेदे संवृत्ते साधकस्यान्त:करणं स्थैर्यमासाद्य बाह्याभ्यन्तरविशुद्धिता पद्यते । प्राणायामशुद्धौ सत्यां प्राणापानगतिरोधेन प्राणवायौ सुस्थिरे मनसो वायोश्चान्योन्यसम्बन्धाद् अन्त:करणं स्थिरत्वमासादयति । वृत्तीनां स्थैर्याद् मलापसरणेन बुद्धिर्नितरां प्रकाशते ।

प्राणायामसाधनादर्वाग् योगी केवलं वहिर्जगत्यैव रम्यते, किन्तु प्राणायामसिद्ध्या साधको मनोराज्यरूपे न्तर्जगत्यपि स्वाधिकारं स्थापयति ।

मार्कण्डेयपुराणे प्राणापानयो र्वाय्वो: निरोधप्रकारं प्राणायामस्य लक्षणं च विधाय लघुमध्यमोत्तरीयभेदेन त्रिविध: प्राणायाम: प्रोक्त: । तत्र लघुप्राणायामो द्वादशमात्रको भवति, ततो द्विगुणो मध्यम: । त्रिगुणस्तूत्तरीय: । निमेषोन्मेषौ मात्राकालो लघ्वक्षर:

---

1\. लघुर्द्वादशमात्रस्तु द्विगुण: स तु मध्यम: ।
त्रिगुणाभिस्तु मात्राभिरुत्तम: परिकीर्तित: ।।

(मा० पु० 36/14)

प्रोच्यते । प्रथमेन लघुना प्राणायामेन स्वेद:, द्वितीयेन मध्यमेन कम्पनं तृतीयेन च वैशद्यं जायते । यथा सिंहशार्दूलकुञ्जरा: सेव्यमाना: सन्तो मनुष्यस्य वशे तिष्ठन्ति तथैव नियम्यमाना: प्राणा योगिनां वशे भवन्ति । यथा हस्तिपको मदोन्मत्तं नागं वशं कुर्वन्ति तथैव योगी प्राणं वशे नयति । यथा वा साधित: सिंह: मृगान् एव हन्ति, न तु मनुष्यान् तथैव नियमित: प्राणायाम: किल्विषमेव हन्ति, न तु मानवशरीरम् । तस्माद् युक्तो योगी सदा प्राणायाम-तत्परो भवेत् । तस्य मुक्तिफलदमवस्थाचतुष्टयं भवति । तच्च §1§ ध्वस्ति: §2§ प्राप्ति: §3§ संवित् §4§ प्रसादश्च । अनिष्टानां दुष्टानां च कर्मणां फलात् चित्तस्य वैरस्य सम्पादनं ध्वस्ति:। ऐहिकानामामुष्मिकानाञ्च लोभमोहोत्पादकानां कामानां निरोध: प्राप्ति:। ज्ञानद्वारा अतीतानागतान् अर्थान् विप्रकृष्टतिरोहितान् चन्द्रसूर्यादिग्रहाणां च प्रभावं समानं ज्ञात्वा यदा यदा योगी समत्वं भजते तदा प्राणायामस्य संस्थिति: संविदुच्यते । येन प्राणायामेन मन: प्राणादय: पञ्च वायव: इन्द्रियाणि तदर्थाश्च प्रसादं यान्ति स प्रसाद इति स्मर्यते ।

किञ्च तत्रैव प्राणायामस्य फलानि निर्दिष्टमस्ति ।साधक: प्राणायामै: दोषान्, धारणाभि:, किल्विषम्, प्रत्याहारे विषयान् ध्यानेन च गुणान् दहेत् । यथा पर्वतधातूनां दोषा अग्निना भस्म-साद्भवन्ति तथैव इन्द्रियजन्या दोषा: प्राणायामै: दह्यन्ते ।[1]

---

1. यथा पर्वतधातूनां ध्मातानां दह्यते मलम् ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ।।
§मा०पु० 36/11§

अतो योगवित् प्रथमं प्राणायामस्य साधनं कुर्यात् । अन्ते तथा हि तन्निरोधं कुर्वीत, प्राणानामुपसंरोधात् प्राणायाम इति स्मृत:।

यथा मानव: प्रमादमारुरुक्षुरेकैकं सोपानमधिरोहति तथैव प्राणायामपरायणो मिताहारी च योगी शनै:शनै: एकां भूमिकां अधीकृत्य अपरामभ्यसेत् ।

प्रत्याहार:

इन्द्रियाणां स्वस्वविषयपरित्यागपूर्वकं चित्तस्वरूपानुकरणमेव प्रत्याहार: । येन क्रियाविशेषानुष्ठानेन इन्द्रियाणि विषयेभ्य: पराङ्मुखीभूय चित्तस्वरूपमनुसरेयु: तत्साधनं वा प्रत्याहार:।[1] यथा कूर्मो बाह्यविषयान् निजाङ्गानि संकोचयति तथैव इन्द्रियाणि प्रत्याहारेण विषयेभ्यो व्यावृत्य अन्त:करणाभिमुखं प्रचलन्ति । यथा राज्ञीं मधुमक्षिकामेव साधारणा अपि मधुमक्षिका अनुसरन्ति तथैव मनसो नुकूलमेव इन्द्रियाणि विषयेषु प्रवर्तन्ते । प्रत्याहारप्रक्रियया मनसा इन्द्रियसम्बन्धो विविच्यते । इन्द्रियाणि चान्त:करणे विलीयन्ते । तथा च बाह्येषु विषयेषु व्यासक्तानामिन्द्रियाणां तत: परावर्तनप्रक्रिया प्रत्याहार उच्यते । अर्थात् यथा कूर्मो निजान् हस्तपादादीन् अवयवान् स्वस्मिन्नुदरे संकोचयति तथैव योगी स्वकीयानि श्रोत्रादीनि इन्द्रियाणि आत्मनि प्रत्याहरति ।[2]

---

1. धारणेत्युच्यते चेयं धार्यते यन्मनो यया शब्दादिभ्य:प्रवृत्तानि
   यदक्षाणि यतात्मभि: प्रत्याह्रियन्ते योगेन प्रत्याहारस्तत:स्मृत:।।
   (मा०पु० 36/41-42)

एवं च कूर्माङ्गवद् विषयेभ्य इन्द्रियाणां संकोच एव प्रत्याहार: उच्यते ।

शरीरे पादाङ्गुष्ठौ, गुल्फौ, जंघामध्य:, चित्योर्मूलम्, जान्वोर्मध्यप्रदेश:, उर्वोर्मध्ये पायुर्मूलम्, नाभि:, हृदयम्, कण्ठकूप:, तालुमूलम्, नासिकामूलम्, नेत्रमण्डलम्, भ्रुवोर्मध्ये, ललाटम्, मूर्धा, ब्रह्मरन्ध्रं चेत्येतानि मर्मस्थानानि सन्ति । एषु स्थानेषु मनसा सह प्राणवायुमाकृष्य योगी शनै:शनै:क्रमश:अङ्गुष्ठाद् ब्रह्मरन्ध्र-पर्यन्तं नयेत् । पश्चात्तत्र स्थित्वा पुन: शनै: शनै: क्रमश: एकस्मा-त्स्थानात् तत्तत्स्थानेषु अधो वतारयन् अङ्गुष्ठे स्थापयेत् । एव-मूर्ध्वाध: प्राणवायोराकर्षणरूप: प्रत्याहार: योगस्यविषय: ।

सौभरि-पराशर-विश्वामित्र-ऋष्यशृङ्गादयो महर्ष-यो पि स्त्रीरूपविषयसंसर्गेण तपोभ्रष्टा जाता:। अतो हि प्रत्याहार-साधनेन कदापि विषयाणां सन्निधौ नैव स्थेयम् । विविधानां सुमधुराणां भोज्यपदार्थानां मनोहराणां महिलानामुत्तमानां वस्त्राणां धनस्य च सम्पर्काद् धीरचरितानामपि महापुरुषाणामिन्द्रियाणि चलन्ति तर्हि का कथा विषयासक्तचेतसां पामराणाम् ।

---

१. अङ्गमध्ये यथाङ्गानि कूर्म: संकोचयेद् ध्रुवम् ।
योगी प्रत्याहरेदेवमिन्द्रियाणि तथात्मनि ।।
[ज्ञ०प्रा०]

२. मनोहराणां भोज्यानां युवतीनां च वाससाम् ।
वित्तस्य च सान्निध्यात् चलेच्चित्तं सतामपि ।।
[प० प्रा०]

175

धारणा ध्यानञ्च
---------------

प्राणायामाभ्यासेन धारणायां मनसो योग्यता भवति, यतो हि प्राणायामाभ्यासात्पूर्वं रजोगुणतमोगुणकार्यभूतयोः मलविक्षेपयोः स्थितौ सत्यां मनसो धारणा भवितुन्नार्हति । पृथ्वीजलतेजोवायवाकाशेषु पञ्चसु महाभूतेषु याः पञ्चप्रकारा धारणा भवन्ति, तासु पादादिपर्यन्तं पृथ्वीतत्त्वस्य स्थानमस्ति । आजानुनाभिपर्यन्तं जलतत्त्वस्य स्थानमस्ति । अनाभेः हृदयान्तं वह्नितत्त्वस्यस्थानमस्ति। आहृदयाद् भ्रुवोर्मध्यपर्यन्तं वायोःस्थानमस्ति । आभ्रूमध्याद् मूर्धपर्यन्तमाकाशतत्त्वस्य स्थानमस्ति । यो योगी पञ्चमहाभूतानां धारणां करोति स पञ्चमहाभूतान् विजित्य दीर्घजीवी भवति ।

अन्तर्जगतः स्थानविशेषु स्वाधिकारस्थापनं धारणा समाम्नायते । स्थूलसूक्ष्मभेदात् सा द्विविधा । तत्र नाभिभ्रूशिरोराङ्गेषु क्रियमाणा स्थूला सूक्ष्मपञ्चमहाभूतेषु समनुष्ठीयमाना च सूक्ष्मा। बाह्याभ्यन्तरभेदेन पुनः तस्या भेदद्वयम् । पञ्चतत्त्वादिसूक्ष्मविषयेषु हृत्पुण्डरीकादौ वा मनसश्चिरकालस्थापनं धारणा प्रोच्यते । प्रथमाधिकारिहितसाधनार्थं बहिर्वस्तुषु अभ्यस्यमाना बाह्यधारणा अन्तर्वस्तुषु विधीयमाना अन्तर्धारणा वेद्या ।

धारणायां साफल्यमुपगतस्य योगिनः पौनःपुन्येन प्रत्याहारसाधनं नावश्यकम् । यतो सौ बहिर्जगतः समुपरतो न्तर्जगत्येव निजान्तःकरणं संस्थापयितुमर्हतामधिकरोति । धारणावस्थायां

---------------------------

सिद्धायां समाधिमध्ये न वहिर्विषया कामपि बाधां प्रकुर्वते । धारणा-साधनं समाधिनोध्यवेशे प्रथमं द्वारमगवन्तव्यम् ।

यथा मनो धार्यते सा धारणा प्रोच्यते ।[1] यथा जला-र्थिनो यन्त्रैर्नालादिभिः शनैःशनैः जलं पिबन्ति, तथैव जितश्रमो योगी शनैः शनैः प्रथमं नाभौ उरसि हृदये तदनु क्रमशः कण्ठे मुखे नासिकाग्रभागे नेत्रे भ्रुवोर्मध्ये मूर्ध्नि वायुं पूरयेत् । ततः परं परमात्मनि धारयेत् । इयमेव सर्वोत्तमा धारणा । इमां धारणां सम्पाद्य योगी अविनाशिनो ब्रह्मणः सत्तां प्राप्नोति ।

पृथिव्यादयः सप्त प्रकाराः सूक्ष्मा धारणाः प्रोक्ताः। सर्वप्रथमा पृथ्वीधारणा, यया योगी सुखं लभते । स आत्मानं पृथ्वीं मन्यमानः पार्थिवं गन्धं परित्यजति । एवं जलधारणया सूक्ष्मस्य रसस्य तेजोधारणया सूक्ष्मस्य रूपस्य वायुधारणया सूक्ष्मस्य स्पर्शस्य आकाशधारणया व्योम्नः सूक्ष्मप्रकृतेः शब्दस्य च त्यागं करोति । यदा योगी स्वमनसो धारणद्वारा सर्वभूतमनः सु प्रविशति तदा तस्य मनो त्यन्तं सूक्ष्मं भवति । एवं सर्वजीवानां बुद्धिषु प्रविश्य सूक्ष्मां बुद्धिं प्राप्नोति पुनश्च तां त्यजति । यः सप्तानामासां सूक्ष्माणां धारणानां सम्यगनुभवं कृत्वा त्यजति, स न पुनरावर्तते । एतासां सप्तानां धारणानां सौक्ष्म्यं दर्शं दर्शं त्यागी योगी परां सिद्धिं व्रजेत् ।[2] यस्मिन् यस्मिन् भूते रागं करोति, तस्मिन् तस्मिन् आसक्तो

---

1. धारणेत्युच्यते चेयं धार्यते यन्मनो यया ।। (मा०पु०36/4)

2. कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्द्धसु ।
किञ्च तस्मात् परस्मिंश्च धारणा परमा स्मृता ।।
(मा०पु० 36/45)

भूत्वा नश्यति । अतो यः परस्परं संसक्तानि ज्ञात्वा एतानि परित्यजति स परमं पदं प्राप्नोति । आसु सप्तसु धारणासु जितासु यथेच्छति ।

ध्यानम्-

भावस्वरूपस्य मनसा चिन्तनमेव ध्यानम् । अथवाऽध्येयाकारे चित्तवृत्तिस्थैर्य धारणाक्रियाभ्यासानन्तरं तेषु तेषु विषयेषु मनस एकतानतास्थापनं वा ध्यानम् । योगमार्गस्य यथा चत्वारो भेदाः तथैव स्थूलज्योतिर्बिन्दुब्रह्मध्यानभेदाद् ध्यानस्यापि चातुर्विध्यम् । ध्यानसाधनमेतत् समाधिप्रवेशे द्वितीयं स्थानम् । ध्यातृध्यानध्येयानां पृथक्पृथगवभासो ध्यानलक्षणम् । एतत्त्रितयस्य स्वतन्त्रसत्ताविनाशःसमाधिरुच्यते ।

ध्यै चिन्तायामिति धातोः ल्युट्प्रत्यये कृते ध्यानशब्दो निष्पद्यते । एकाकारवृत्त्या शिवे स्थितस्य चित्तस्य प्रत्ययान्तररहितः प्रवाहो नाम ध्यानमुच्यते । अतो भूयोभूयः शिवस्य चिन्तनं कर्तव्यम् । सर्वं परित्यज्य कल्याणदायकः एकः शिव एव ध्येयः। अत्रैवाथर्वणी श्रुतिःसमाप्ता भवति । ध्यानस्य प्रयोजनद्वयम् एको विमुक्तिप्रत्ययो द्वितीयश्चाणिमादिप्रत्ययः। ध्याता ध्यानं ध्येयं ध्यानप्रयोजनञ्चेतानि चत्वारि ज्ञात्वा योगी योगं युञ्जीत् । ज्ञानवैराग्यसम्पन्नः श्रद्धाक्षमायुक्तो ममतारहितः सततमुत्साही ध्याता प्रशस्यते ।

---

1• जपाच्छान्तः पुनर्ध्यायेत् ध्यानाच्छान्तःपुनर्जपेत् ।
एवं जपध्यानबलः पुरुषस्य क्षिप्रं योगः सिध्यति ।।
(37/56-59)

ध्याता ध्यानं ध्येयं ध्यानप्रयोजनं चेति चत्वारि शास्त्रेव ध्याता ध्यानमाचरेत् ज्ञानविज्ञानसम्पन्नो नित्यमव्यग्रमानसः श्रद्धानःप्रसन्नात्मा साधको ध्याता कथ्यते । अव्याक्षिप्तेन मनसा परमेश्वरस्य चिन्तनं ध्यानमभिधीयते । यथा स्वल्पो पि योगाभ्यासः पापराशिं भस्मसाद् कुरुते तथैव क्षणमात्रमपि कृतं ध्यानं धातुःसर्वाणि पापानि निर्दहति । बुधवाहस्य ध्यानस्यालम्बनं ध्येयमुच्यते । तच्च स्वयं साम्बःसदाशिवो स्ति । मोक्षसुखस्य पूर्णैश्वर्यमणिमादिकसिद्धयश्च शिवध्यानस्य प्रयोजनमस्ति ध्यानात् सौख्यं मोक्षश्चेत्युभयं प्राप्यते । अतः सर्वं परित्यज्य नरो ध्यानयुक्तो भवेद् ध्यानं बिना ज्ञानं न भवति ।

येन योगस्य साधनं न कृतं तस्य ध्यानं न सिध्यति । येन ज्ञानं ध्यानञ्चेत्युभयं प्राप्तं तेन भवार्णवः तीर्णः। निर्मलैकाग्रता पूर्णमशेषोपाधिवर्जितं च ज्ञानं योगाभ्यासेन युक्तस्य योगिन एव सिध्यति । प्रक्षीणाशेषपापानामेव बुद्धिः ध्याने ज्ञाने च प्रवर्तते । पापोपहतबुद्धीनां तु ज्ञानध्याने न जायेते तद्वार्ता तु सुदुर्लभैवास्ति। यथा प्रदीप्तो वह्निः शुष्कमार्द्रन्चेन्धनं निर्दहति तथैव ध्यानाग्निः सर्वं शुभाशुभं कर्म भस्मसात्कुरुते । यथा स्वल्पो पि दीपो महान्तमपि अन्धकारं नाशयति तथैव स्वल्पो पि योगाभ्यासःमहापापं विनाशयति । अथवा क्षणमात्रमपि परमेश्वरं ध्यायतो यन्महत्कल्याणं भवति तस्यान्तो न विद्यते । ध्यानेन समं किञ्चित्तीर्थं नास्ति,

---

1· संशोध्य निर्मले सत्वे स्थितो युञ्जीत योगवित् ।
इन्द्रियाणीन्द्रियार्थेभ्यःप्राणादीन् मन एव च ।।
( मा० पु० 36/32 )

न च किञ्चित्तम:, नापि कश्चन यशो ऽस्ति । तस्मात्सततं ध्यानमेव समाचरेत् ।

लब्धात्मयोगस्य योगिनो न जलपूर्णं तीर्थं तीर्थं, नापि मृत्तिकादिनिर्मिता मूर्तिर्मूर्तिरस्ति, किन्तु ते आत्मतीर्थे अगाहन्ते सततमात्मदेवभजने संलग्ना: तिष्ठन्ति । यथा योगिनो मृत्तिकादि-मूर्तीनां दर्शनं भवति तथैव योगिनामीश्वरीयसूक्ष्मस्वरूपस्य प्रत्यक्षं जायते । यथा राज्ञामन्तश्चरा एव स्वजना:परिजनाश्च प्रिया भवन्ति, न बहिश्चरा: तथैव शिवस्यान्तर्ध्यानस्था एव भक्ता: शम्भोरधिका: प्रिया सन्ति, नतु बाह्योपचाराश्रयिण: कर्मिण: । यथा वा बाह्या राजभवने राजकीयपुरुषोऽवित्तस्य फलस्योपयोगं कर्तुं न प्रभवन्ति, किन्तु केवलमन्त:पुरपुरुषा एव तत्फलभागिनो भवन्ति तथैव कर्मिण: तत्फलं नाप्नुवन्ति, यद् ध्यानयोगिन: प्राप्नुवन्ति ।

5·समाधि:

दार्शनिकशिरोमणिना श्रीमता शङ्कराचार्येण विवेकचूडामणौ समाधिं वर्णयता प्रोक्तं यत् समाधिना समस्तानां वासनाग्रन्थीनां विनाश:, अखिलकर्मणां नाशश्च भूत्वा बाह्याभ्यन्तरे सर्वत्र सर्वदा आनायासं भगवत्स्वरूपविस्फूर्तिर्भवति । निर्विकल्पकसमाधिना ब्रह्मतत्त्वस्य स्फुटं ज्ञानं जायते, नान्यथा, यतोहि अन्यासु अवस्थासु मनोवृत्तेश्चाञ्चल्यात् तज्ज्ञानमन्यप्रतीतिभि: मिश्रितं भवति ।

यदा ध्येयाकारभूतं मन: स्वस्वरूपं परित्यज्य सर्वसंकल्पविकल्परहितं सत् केवलं ध्येयवस्तुस्वरूपे वतिष्ठते तदेव समाधि:कथ्यते । अत एव भगवता पतञ्जलिना योगसूत्रे -तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि: ।[1] इति समाधिलक्षणं कृतम् । अर्थात् ध्यानमेव यदा ध्येयज्ञानादन्यज्ञानहीनं ध्येयस्वभावावेशाद् भवति तदा तद् ध्यानं समाधिरित्युच्यते । ध्येये सम्यक् समाधानादन्यवृत्तिनिरोध एव सामान्यतया समाधिरिति भास्वतीकार:। ध्यातृ-ध्येय-ध्यान कलनावद् ध्यानं तद्रहितं च समाधिरिति विज्ञानभिक्षु:। अमृतबिन्दूपनिषदि च यस्मिन् काले ध्येयस्वरूपं प्राप्तं मन: आत्मन: स्वरूपं परिहाय ध्येयाकारेणावतिष्ठते च समाधिरिति प्रोच्यते ।

याज्ञवल्क्यसंहितायामपि यथा समुद्रे प्रविष्टो जलबिन्दु: तेन सहैक्यमापद्यते ध्येये प्रविष्टं मन: यद् ध्येयाकारेण परिणमते तत्समाधिरित्युच्यते ।[2]

---

1· योग सू0 3/3

2· सरित्पतौ निविष्टाम्बु यथा भिन्नं लयं व्रियात् ।
तथा भिन्नं मनस्तत्र समाधिं समवाप्नुयात् ।। [या0सं0]

हठयोगप्रदीपिकायामपि यथा जले क्षिप्तं लवणं स्वस्वरूपं परिहाय जलाकारं भवति तथैव आत्मनि स्थितं मनः आत्मस्वरूपं परिहाय तेनैक्यमापन्नं भवति । स समाधिःप्रोच्यते[1] ।

समाधिर्द्विविधः, सम्प्रज्ञातो असम्प्रज्ञातश्च । तयोर्यत्र ध्यातृ-ध्यान-ध्येयानां पृथक् पृथक् प्रतिभासो भवति स संप्रज्ञातः समाधिः । अयं सविकल्पःसबीजो वा समाधिः कथ्यते । यत्र च ध्यातृ-ध्यानक्रिययोः पृथक् प्रतिभासो न भवति, किन्तु ध्येयाकार एव वृत्तिर्जायते सो सम्प्रज्ञातसमाधिः । अयमेव निर्विकल्पो निर्बीजो वा समाधिः प्रोच्यते । एष योगक्रियाभिः दशमुद्रासाधनद्वारा वा नैरन्तर्याभ्यासेन सिध्यति । समाधौ सूक्ष्मसिन्द्रियं विकसिति, दिव्यं चक्षु भवति, आत्मसाक्षात्कारश्च जायते। समाधये नवरतं चेष्टायाध्यवसायस्य चावश्यकता भवति । समाधिर्योगस्यान्तिममङ्गमस्ति । समाधिनैव सर्वत्र प्रज्ञालोकः प्रवर्तते । निश्चलसागरे इव यत्रार्थमात्रस्य प्रकाशःस्यात् स्वस्वरूपस्य शून्यवद्भावनं भवेत्, स समाधिः कथ्यते । ध्येये मनो निवेश्य सुस्थिरं पश्यन् निर्वाणानलवत् योगी समाधिस्थो भवति। समाधिस्थो योगी न किञ्चित् शृणोति, न च जिघ्रति नापि जल्पति, न पश्यति, न स स्पर्शं विजानाति, नापि मनसा

---

1. सलिले सैन्धवं यद्वत् साम्यं भवति योगतः ।
तथात्ममनसोरैक्यं समाधिरभिधीयते ।। (ह०यो०)

संकल्पयते, नाभिमन्यति किञ्चित्, किन्तु काष्ठवत् स्थितः शिवे विलीनात्मा भवति । यथा निवातस्थो दीपो न किञ्चित् स्पन्दते तथैव समाधिस्थो योगी न किञ्चित् चलति । एवमुक्तं योगमभ्यस्यतो योगिनः शनैः शनैः अन्तरायकारकाः सर्वे विघ्ना विलीयन्ते ।

ध्येयस्यैव यद् मनसा निष्पाद्यमानं कल्पनाहीनं ध्यातृ-ध्येयध्यानरहितं स्वरूपग्रहणं क्रियते, स एव समाधिरभिधीयते ।[1] समाधिना निष्पद्यमानं भवदत्र साक्षात्कारस्वरूपं विज्ञानमेव ब्रह्म प्रापकं प्रक्षीणाशेषभावन एकमात्रं परमात्मैव प्रापणीयः। मुक्तिलाभे क्षेत्रज्ञः कर्ता ज्ञानञ्च करणमस्ति तेन क्षेत्रज्ञस्य मुक्तिरूपं कार्यं निष्पाद्य विज्ञानं कृतकृत्यं सन्निवर्तते । भगवद्भावमापन्नो जीवः परमात्मना अभिन्नो भवति । भेदज्ञानमज्ञानजनितमेवास्ति । भेदजनके ज्ञाने आत्यन्तिकं नाशमुपगते जीवब्रह्मणोः अविद्यमानं भेदं कर्तुं कः शक्नोति ।[2]

---

1. वेदान्तोक्ताः सर्वयज्ञक्रियाश्च यज्ञाज्जाप्यं ज्ञानमार्गश्च जप्यात् ।
ज्ञानाद्ध्यानं संगरागव्यपेतं तस्मिन्प्राप्ते शाश्वतस्योपलब्धिः ।।
[मा०पु० 38/25]

2. तद्भावभावनापन्नस्ततो सौ परमात्मना ।
भवत्यभेदी भेदश्च तस्या ज्ञानकृतो भवेत् ।।



## अष्टमोऽध्याय:

## योगक्रियाविमर्श:

(1)-योगस्थानानि-

ध्यानयोगस्य साधनार्थं स्वभावत: स्वच्छं शुद्धं निर्मलं गङ्गादिनदीनां पवित्रं तीरं पर्वतारण्यगुहादेवालया: तीर्थस्थानं मनोरमयुद्यानं सुन्दरसमीरसनाथमेकान्तस्थलमुपयोगि भवति । ध्यानसमये साधकेन निर्भयेन भवितव्यम् । अन्यथा मनसि किञ्चिदपि भये समुपस्थिते एकान्तेऽपि स्थाने चित्तविक्षेप: सम्भवति। अतस्तदानीं मनसि दृढधारणायेदं निश्चेतव्यं यत् सर्वशक्तिमत्त्वात् सर्वव्यापकत्वाच्च सर्वत्रास्ति परमात्मा तत्सत्त्वेऽपि कस्यापि वस्तुनो भयं न सम्भवति । यदि प्रारब्धवशाद् ध्यानसमये मृत्युरपि भवेत्तर्हि तेनापि परिणामे कल्याणमेव भवति । ध्याने रागद्वेषहर्षशोकादिदूषितवृत्तीनां सर्वथा त्याग: कर्तव्य:। ध्यानावसरे निद्रालस्यप्रमादादिविघ्नेभ्य: सावधानतया स्थेयम् । अन्यथा मन इन्द्रियाणि च वञ्चयित्वा अनेके विघ्नाउपतिष्ठन्ते ।दृढासनेन योगिना मनो बुद्धिद्वारा तैलधारावद् अविच्छिन्नभावेन निरन्तरं भगवत्स्वरूपस्य चिन्तनं कर्तव्यम् । अत एव सांख्यसू[1] भगवता कपिलेन योगाभ्यासोपयोगि स्थाननिर्णयमेव कृतवानस्ति ।

पूर्वं योगप्रतिकूलानि स्थानानि उक्त्वा पश्चाद् योगसाधनोपयुक्तानि स्थानानि प्रोक्तानि । तथाहि -मनोविकलकारके ध्माते शान्ते द्वन्द्वे शीताधिक्ये उष्णप्रधाने अनिलातके सशब्दे

---

1. अरण्यगुहापुलिनादिषु योगाभ्यासोपदेश: ।।

(सा०सू० 4/2/42)

जलाभ्यासे जीर्णशीर्णगोष्ठे चतुष्पदे सर्पसंयुक्ते श्मशाने नद्यन्ते अग्निसन्निधौ चैत्ये वल्मीके सभये कूपसमीपे शुष्कपर्णनिचये च स्थाने साधकः कर्हिचिदपि योगं न युञ्जीत ।

यदि मूढत्वात् साधका एतान् देशान् अनादृत्य योगं युञ्जीरन् तर्हि तेषां बाधिर्यं जडता स्मृतिभ्रंशो मूकत्वमन्धता ज्वरोऽज्ञानप्रादुर्भावश्चेत्यादयो योगविघ्नकारकाः समुत्पद्येरन् । तस्माद् योगसाधकैः सर्वात्मना स्वशरीरारोग्यतासंरक्षणयत्नं विधेयम्, यतो हि शरीरे सुरक्षिते एव धर्मार्थकाममोक्षाः साधयितुं शक्याः। अपि च एकान्ते जनसञ्चाररहिते शब्दरहिते निर्भये पर्वते शून्यागारे शुचौ रम्ये गुहे देवालये च समासीनो योगी रात्रेः प्रथमे यामे दिवा पूर्वाह्णे मध्याह्ने च एकाग्रचेता युक्ताहारः सन् सम्यक् योगाभ्यासं विदधीत साधकः ।

योगवर्ज्यस्थानानि एवमुक्तानि सन्ति । वह्निसमीपं वनं शुष्कपर्णचयः उदपानं नदी च । एषु स्थानेषु ध्यानतत्परो योगी ध्यानं न युञ्जीत । किन्तु 17 अध्याये योगोपयुक्तानि स्थानानि एवं निर्दिष्टानि -शून्ये[1] अवकाशे गुहायां वने नदीपुलिने च योगी योगाभ्यासं कुर्यात् ।

अग्न्याभ्यासे जले शुष्कपर्णचये जन्तुव्याप्ते श्मशाने जीर्णगोष्ठे चतुष्पथे सशब्दे चैत्ये वल्मीके अशुभे दुर्जनाक्रान्ते मशकादि-समन्विते देहबाधे दौर्मनस्यादिसम्भवे स्थाने योगानुष्ठानं न संभवति

---

1. शून्येष्वेवावकाशेषु गुहासु च वने तथा ।
नदीनां पुलिने चैव नित्यं युक्तः समाचरेत् ॥
[वा०पु० 17/5]

किन्तु सुगुप्ते सुशुभे देशे पर्वतस्य गुहायां नदीतीरे पुण्यदेशे[1] देवतायतने गृहे निर्जने जन्तुवर्जने स्थाने साधकः योगं युञ्जीत ।

मार्कण्डेयपुराणे उल्लिखितमस्ति यत् नातिशीते नचोष्णे नापि सुखदुःखादिद्वन्द्वव्याप्ते जनाकुले वायुपूर्णे वा स्थाने ध्यानतत्परो योगी योगमभ्यसेत् । कोलाहलपूर्णे अग्निसमीपे जीर्णशीर्णगृहे चतुष्पथे शुष्कपर्णनिचये नद्यां श्मशाने सर्पसंयुक्ते सभये कूपाभ्यासे चैत्यवल्मीकसञ्चये देशे योगाभ्यासं विवर्जयेत् । यस्मिन् देशे काले वा सात्त्विकानां वस्तूनां प्राप्तिर्न संभवेत् तौ देशकालौ योगार्थं परित्याज्यौ । योगाभ्यासे सतो दर्शनं निषिद्धमस्ति तस्मात् तत्परिवर्जयेत् ।[2] य एतेषां देशकालानां विचारमकृत्वा मूढतया हठाद्योगमारभते । तस्याज्ञानयोगिनः तत्कार्ये विघ्नोपस्थापका बाधिर्यं जडता, स्मृतिभ्रंशो मूकत्वमन्धत्वं ज्वरादयश्चानेके दोषाः समुद्भवन्ति । यदि प्रमादाद्योगिनां दोषा उत्पद्येरन् तर्हि तेषां शमनाय चिकित्सापि तत्रैव निर्दिष्टास्ति वातगुल्मगुदावर्तोदररोगाणां शान्तये घृतमिश्रितामुष्णां यवागूं भक्षयेत् । सा निरुद्धं वायुं बहिःनिःसारयति गुल्मादींश्च दूरीकरोति ।

एवं शरीरकम्पे मनसि अचलः पर्वतस्य धारणां कुर्यात् । वागवरोधे वाग्देव्याः धारणं कुर्यात् । बाधिर्ये श्रवणशक्तिधारणां कुर्यात् । पिपासोद्गमे जिह्वायां सरसाम्लफलस्य धारणां कुर्यात् ।

---

1. अदेशकाले योगस्य दर्शनं नहि विद्यते । कू०पु० 11/47

2. कालेष्वेतेषु युञ्जीत न योगं ध्यानतत्परः ।
न शब्दाग्निजलाभ्याशे जीर्णगोष्ठे चतुष्पथे ।।
शुष्कपर्णचये नद्यां श्मशाने च सरीसृपे ।
सभये कूपतीरे वा चैत्यवल्मीकसंचये ।।
देशेष्वेतेषु तत्त्वज्ञो योगाभ्यासं विवर्जयेत् ।।

एवं यस्याङ्गे रोगा उत्पद्येरन् तत्र तत्र ताभोपस्थितिकां धारणां कुर्वीत । उष्णतायां शैत्यस्य शैत्ये उष्णतायाश्च धारणा कार्या । मस्तके एकं काष्ठफलकं संस्थाप्य अन्येन काष्ठकीलकेन शब्दकरण-धारणां कुर्यात् । अनेन लुप्तायाः स्मरणशक्तेराविर्भावो भवति। एवं सर्वेषां व्यापकानां द्युलोकपृथ्वीवाय्वग्नीनां धारणां कुर्यात् । अनेन मानवीयशक्तीनां जीवजन्तुभिः क्रियमाणानां च बाधाना चिकित्सा भवति । यदि कश्चन मानवेतरो जीवः योगिनामन्तरे प्रविशेत्तर्हि वायोः अग्नेश्च धारणां कुर्यात् । एवं सर्वात्मना योगिभिरात्मनः शरीरस्य रक्षा कर्तव्या । यतो हि शरीरमेव चतुर्णां पुरुषार्थानां साधनमस्ति ।

किन्त्वेकान्तस्थाने प्रकाशस्थाने गुहासु वनेषु सम्यग्ध्यानं भवति । अतः एषु स्थानेषु नित्ययुक्तो योगी सम्यग्ध्यानं कुर्यात् ।

## 2· योगमुद्राविमर्शः

देवीभागवते लिखितमस्ति यत् सिद्धासनं समं सर्वोत्कृष्टं किमप्यासनं न विद्यते, न च कुम्भकसम उपयोगी कश्चन प्राणायामो वर्तते, नापि खेचरीसमा काप्यन्या हितकारिणी मुद्रा वा वर्तते । प्रातःसन्ध्यासमये प्राणायामोत्तरं खेचरीमुद्रा कर्तव्यत्वेनोपदिष्टा-ऽस्ति । यदा योगिनः चित्तमिन्द्रियजन्यानां पदार्थानां परित्या-गात्लक्ष्यहीनं भूत्वा खे आकाशे विचरति, वाणी च खे गता चरति

तदा तयोः द्वयोर्नियन्त्रणाय उभयोर्भ्रुवोरन्तर्गता दृष्टिः स्थिरा सती खेचरी मुद्रेत्युच्यते ।

किन्च तत्रैव गायत्रीध्यानानन्तरं तत्तन्तुष्टये निम्नाङ्कितश्चतुर्विंशतिमुद्रा प्रदर्शिताः सन्ति -

(1) सुमुखम्, (2) सम्पुटम्, (3) विततम् (4) विस्तृतम्
(5) द्विमुखम् (6) त्रिमुखम् (7) चतुर्मुखम् (8) पञ्चमुखम्
(9) षण्मुखम् (10) अधोमुखम् (11) व्यापकाञ्जलिकम्
(12) शकटम् (13) यमपाशम् (14) ग्रथितम् (15) सम्मुखोन्मुखम् (16) विलम्बम् (17) मुष्टिकम् (18) मत्स्यम्
(19) कूर्मः (20) वराहः (21) सिंहाक्रान्तम्
22) महाक्रान्तम् (23) मुद्गरम् (24) पल्लवम् ।

एताः 24 मुद्रा गायत्रीजपस्यादौ प्रदर्शनीयाः । योगदर्शने चतुर्विंशतिमुद्राणामपि वर्णनमुपलभ्यते । तासु मुद्रासु काश्चन आसनेषु काश्चित् प्राणायामेषु कियत्यः प्रत्याहारे कतिपया धारणायां स्थूलध्याने ज्योतिर्ध्याने च साहाय्यमाचरन्ति ।

योगमुद्रासाधकस्योद्देश्यमिदं यदेतेन ब्रह्मरन्ध्रद्वारा सुषुम्णामुखेन वा निद्रिता कुण्डलिनी जागृता भूत्वा ऊर्ध्वमुत्तिष्ठति कुण्डलिनीजागरणानन्तरं षट्चक्राणां ग्रन्थीरूपाणां भेदनं भवति ।

---

1. एवं ध्यात्वा विधानेन गायत्रीं वेदमातरम् ।
ततः मुद्राः प्रकुर्वीत देव्याः प्रीतिकराः शुभाः ॥
(दे० भा० 98/15)

प्राणो नाड्यां सुषुम्णां प्रविशति, चित्तं निरालम्बं जायते मृत्युभयं च दूरी भवति । आधारशक्तिरूपा कुण्डलिनी समस्तस्य योगाभ्यासस्य मूलमवलम्बनमस्ति । मार्कण्डेयपुराणे वर्णनमस्ति यत् योगी महामुद्रा नभोमुद्रा उड्डियान् जालन्धरं मूलबन्धं च वेत्ति स योगसिद्धिभाग्भवति । या महामुद्रा खेचरीमुद्रा निगद्यते । तल्लक्षणं यथा -नाडीसमूहस्य पूरकरेचककुम्भकै:संशोधनं चन्द्रसूर्यनाड्यो: संयोजनं विकारहेतूनां रसानां सम्यक् शोषणं च महामुद्रा निगद्यते । वामपादेन शिश्नमापीड्य वक्ष:स्थले चिबुकं कृत्वा हस्ताभ्यां प्रसारितं दक्षिण पादं धारयन् पुन: प्राणवायुनोदरमापूर्य पश्चाच्छनै: शनै: संचरेदिति यदेषा महतो दोषस्य विनाशिनी महामुद्रा प्रोक्ता । एवं प्रथमत: चन्द्रनाड्यामिडायां प्राणायामान् समभ्यस्य पश्चात् सूर्यनाड्यां पिङ्गलायां पुनरभ्यसेत् । पूरकरेचककुम्भकानां यावत्समाना मात्रा भवेत् तावत्पर्यन्तमभ्यस्य ततो मुद्रां त्यजेत् ।

एतां मुद्रामभ्यस्यतो योगिन: पथ्यापथ्यविचारो नास्ति । यत् किञ्चिद्भुज्यते तत्सर्वं पथ्यमेव भवति । विकारहेतवो निरसा: अपि पदार्था:सरसा भवन्ति । पीतं घोरं विषमपि पीयूषमिव जीर्यति । यो महामुद्रामभ्यसेत् तस्य क्षय-कुष्ट-गुदावर्त-गुल्माजीर्णादयो रोगा नश्यन्ति । यदा कपालस्याभ्यन्तरे छिद्रे जिव्हां विपरीतगामिनीं कृत्वा दृष्टि: भ्रुवोरन्तरगता सती स्थिरी क्रियेत तदा खेचरीमुद्रा भवति । य: खेचरी मुद्रां वेत्ति स शिरोरोगेन न

---

1· यथैवाग्रफलं ध्यायेत् तृष्णार्त्तो रसनेन्द्रियम् ।
यस्मिन् यस्मिन् रुजा देहे तस्मिंस्तदुपकारिणीम् ।।

[मा० पु० 36/57]

।१।

पीड्यते , न च कर्मणा लिप्यते,नापिकालेन बाध्यते । एतस्या-भ्यासकाले चित्तं जिव्हां च खे विचरतो तो स्या मुद्राया नाम खेचरी भवति । सिद्धा एनां बहु निषेवन्ते । यावच्छरीरे बिन्दुः स्थिरः तिष्ठति तावत्कालपर्यन्तं बिन्दुर्निर्गच्छति ।

महाप्राणः अहोरात्रमुड्डीनं कथ्यते । अतस्तद्बन्धन-विधानमुड्डीयानबन्धः।ओच्चलितयोर्हस्तयोरग्रभागे प्रसारितयोःद्वयोः पादयोर्मध्यभागं नाभेरूर्ध्व धारणे उड्डीयानबन्धो भवति । अस्य बन्धस्य साधनोत्तरे मृत्युभयं न भवति, येन अधोगामि शरीरा-न्तर्गतछिद्रजलं कण्ठदेशे नाडीजालेन यस्माद् बध्यते तस्मादेव जालन्धरे बन्धो नाम निगद्यते । एष जालन्धरो बन्धो दुःखौघनाशः। कण्ठसंकोचलक्षणं जालन्धरे बन्धे सिद्धे सति ललाटचन्द्रमण्डलस्थितं पीयूषं जाठरे नैले न पतति, नवा वायुः प्रधावति । पादमूलभागेन गुदं संपीड्य अपानवायुमूर्ध्वमाकृष्य गुदस्थानसङ्कोचनं मूलबन्धो भि-धीयते । अधोगतस्यापानवायोराकुञ्चनेनोर्ध्वनयनं मूलबन्धे भवति । अस्य मूलबन्धस्याभ्यासेनापानप्राणवाय्वोरैक्यं जायते । तेन मूत्र-पुरीषयोः क्षयो भवति । सततं मूलबन्धस्याभ्यासाद् वृद्धो पि युवा भवति ।

अपि च महामुद्रादीनां दशमुद्राणां मध्ये विपरीतकरणी-मुद्राया लक्षण मेव कृतमस्ति । तालुदेशे स्थितश्चन्द्रमा अधोमुखः

---

सन् अमृतं वर्षति । नाभिदेशे च स्थितः सूर्यः ऊर्ध्वमुखो भूत्वा तद् ग्रसति (भक्षयति खादति) । अतःएवं विधा क्रिया विधातव्या: यथा ऊर्ध्वं नाभिः अधस्ताच्च तालु भवेत् । एवं क्रियमाणे सूर्यं ऊर्ध्वं चन्द्रमाश्चाधःस्ताद्भवति । कार्यमिदं विपरीतकरणाभ्यासेनैव सम्भवति । अत इयं मुद्रा विपरीतकरणीति प्रोच्यते । प्राणायामस्य विधानवेत्ता योगी काकचन्चुवत्स्वकीयेन मुखेन अत्यन्त तं शीतं प्राणवायुं पीत्वा जरारहितो भवति । तालुविवरे जिव्हां निधाय ऊर्ध्वमुखः सन् अमृतपानेन असंशयं कपालाभ्यन्तरे निर्जरो भवितुमर्हति । यो योगी ऊर्ध्वजिव्हःसन् अमृतपानं करोति, स एकस्मिन् पक्षे मृत्युं जयति । किन्च जिह्वाग्रभागेन तन्मूलस्थं छिद्रं सम्पीड्य सधाग्रयीदेवीध्यानेन कपाले कविर्भवति । यस्य योगिनः शरीरमेमृतपानेन परिपूर्णं भवति स द्विवत्सराभ्यन्तरे ऊर्ध्वरेता अणिमादिसिद्धिसम्पन्नश्च जायते । नित्यममृतपूर्णं शरीरं योगिनं यदि तक्षकः सर्पोऽपि दशेत्तर्हि तस्य विषप्रभावो न भवति ।

------------------------------

१. धर्मार्थकाममोक्षाणां शरीरं साधनं यतः ।
प्रवृत्तिलक्षणाख्यानाद् योगिनो विस्मयात् तथा ।।
(भा० पु० 36/62)

## 3. षट्चक्रनिरूपणम्

यदि विश्वस्मिन् सर्वेभ्यो वस्तुभ्यो दुर्लभं किमपि वस्तु विश्वे विद्यते तदिदं मानवशरीरमेवास्ति । एतद्द्वारैव भौतिकाध्यात्मिकजगतोर्नैके चमत्कारा उपलभ्यन्ते । अतो मानवशरीरमाश्चर्याणामाश्चर्यमुच्यते । अनेनैव निर्वाणसुखं निर्विकल्प समाधिः भगवत्प्राप्तिश्चावाप्यते । शरीरं व्यवहारस्य परमार्थस्य च मुख्यमस्ति साधनम् । एतेनाभीष्टस्य वस्तुनः उपलब्धिसम्भवः । जनकल्याणभावनया प्रयतमाना अपि मानवा अस्वस्थे शरीरे नात्मनो, नापि अन्यस्य, न वा समाजस्य वास्तविकं कल्याणं कर्तुं प्रभवन्ति । अतो योगसाधनैः शरीरस्यारोग्यतासम्पादनमत्यावश्यकम् ।

शरीरेऽस्मिन्ननेकेषां तत्त्वानां सद्भावेऽपि योगसाधनेष्वावश्यकज्ञातव्यावयवादीनां स्वरूपाणि तत्र कर्तव्यं ध्यानादिकं विज्ञाय कैवल्योपलब्धये चक्राणां परमोपयोगित्वात्तद्विचार आरभ्यते ।

मानवशरीरे सप्तसु स्थानेषु कमलस्वरूपाणि सप्त चक्राणि (ग्रन्थयः) विलसन्ति । एषु षट्सु चक्रेषु योगसाधनया सिद्धौ समधिगतायां सप्तमं चक्रमुपरोहमानो मानवो मुक्तिं लभते । अत्र चतुर्विधयोगेषु लययोगसाधकाः प्रधानतया षट्चक्रभेदनक्रियामेव प्रधानस्वरूपां मन्यन्ते ।

योगिनो मानवशरीरमिदं सप्तप्रासादं भवनं मन्यन्ते । तत्र मूलाधार-स्वाधिष्ठान-मणिपूरक-अनाहत-विशुद्ध-आज्ञा-सहस्रार-चक्राणि सन्ति सप्तप्रासादाः ।

यथा भूमण्डलस्याधारो मेरुरस्ति तथैव मानवशरीरस्याधारो ऽस्ति मेरुदण्डः। मेरुदण्डः पृष्ठमांससंलग्नैः 33 अस्थिखण्डैः सम्बद्धो ऽस्ति । अयमभ्यन्तरे अवकाशवान् वर्तते । अस्याधस्तनो भागो ऽतितीक्ष्णः सूक्ष्मश्चास्ति । तत्समीपवर्तीभागः कन्द इति नाम्ना व्यवह्रियते । अत्रैव जगदाधारमहाशक्तेः प्रतिमूर्तिः कुण्डलिनी विराजते । मेरुदण्डाद्बहिर्वामभागे इडानाम्नी तेजोरूपा सुषुम्नानाडी तु मेरुदण्डस्याभ्यन्तरे मूलाधारस्कन्दभागादारभ्य कपालस्थितसहस्रारपर्यन्तं गच्छति ।

यथा कदलीस्तम्भे दलानि भवन्ति तथैव सुषुम्णाया अभ्यन्तरे क्रमशो वज्रा चित्रणी-ब्रह्मनाड्यः सन्ति । योगक्रियाकौशलेन जागृता कुण्डलिनी ब्रह्मनाडीद्वारा कपालस्थितब्रह्मरन्ध्रपर्यन्तं गत्वा शिवेन सह संयुज्यते ।

मेरुदण्डस्याभ्यन्तरे ब्रह्मनाड्यां ग्रथितानि षट् कमलानि यानि षट्चक्राणीत्युच्यते । प्रत्येकं कमलं विभिन्नवर्णं विभिन्नसंख्यादलं च विद्यते । इमानि षट् चक्राणि येषामवयवानां सम्मुखे मेरुदण्डस्याभ्यन्तरे विद्यन्ते तेषां नाम्ना प्रसिद्धानि सन्ति । मार्कण्डेयपुराणे षट्चक्रवर्णनं प्राप्यते ।[1]

---

1. मूलाधारं स्वाधिष्ठानं मणिपूरकमेव च ।
अनाहतं विशुद्धं च आज्ञा षट्चक्रमुच्यते ।।

[ मा० पु० 35/72 ]

(1) मूलाधारचक्रं यथा- मेरुदण्डस्याधस्तात् कन्दप्रदेशसम्बद्ध-
पायूपस्थयोर्मध्ये विद्यमानमेतच्चक्रं द्रुतसुवर्णवर्णं वर्तते । तत्र चत्वारि
दलानि सन्ति । तेषु चतुर्षु दलेषु क्रमशः सानुस्वाराः व-श-ष-सेति
चत्वारो वर्णा सन्ति । इदं चक्रं चतुष्कोणमस्ति ।अस्यां बीजं
कामबीजं "लं, इति विद्यते । कमलकर्णिकायां डाकिनीशक्तिः ।
अस्य चक्रस्य मध्ये स्वयम्भूलिङ्गं वर्तते, यस्य चतुर्दिक्षु सार्धत्रिवलया-
वर्ता सर्पाकारा स्वमुखे पुच्छं दधाना सुप्ता कुण्डलिनीशक्तिर्विराजते।
प्राणायामैः समुद्बुद्धा इयं कुण्डलिनी शक्तिः विद्युल्लतावन्मेरुदण्ड-
स्याभ्यन्तरे ब्रह्मनाड्यां प्रविष्टा कमलानि विकासयन्ती ऊर्ध्वं
सहस्रारे स्थितेन शिवेन सह मिलितुं गच्छति । इदं चक्रं कामफलप्रदं
कामरूपाख्यं पीठमप्युच्यते ।[1]

(2) स्वाधिष्ठानचक्रं यथा-उपस्थस्य समीपे सुषुम्णायां वर्तमान-
मिदं चक्रं हीरकप्रभं सिन्दूरवर्णं विद्यते । अत्र षट् दलानि सन्ति-तेषु
क्रमशःसानुस्वाराः ब-भ-म-य-र-लेति षट् वर्णा विराजन्ते । अस्य
बीजं वरुणबीजं "वं, इति विद्यते । एतत्कमलकर्णिकायां राकिणीशक्तिः
वर्तते ।

---

1. विद्युल्लतासद्वपुषः श्रियमावहन्ती
यान्तीं स्ववारभवनाच्छिवराजधानीम् ।
सौषुम्णमार्गकमलानि विकासयन्ती
देवी भजे हृदि परामृतसिक्तगात्राम् ।।
(ह०यो०)

{3}- मणिपूरकचक्रम्-महाप्रभं मेघसदृशं विद्युदाभं च चक्रमिदं नाभिप्रदेशे मेरुदण्डस्याभ्यन्तरे सुषुम्णायां स्थितमस्ति । एतत्कमलं नीलवर्णं विद्यते । अत्र दश दलानि सन्ति, तेषु क्रमशः सानुस्वाराः ड-ढ-ण-त-थ-द-ध-न-प- फेति दश वर्णा विद्यन्ते । अस्य बीजं वह्निबीजं रं, इति वर्तते । एतस्य क्वचन् नाभिचक्रमपि नाम श्रूयते ।

{4}- अनाहतचक्रम्- उद्यदादित्यसन्निभस्य अस्य चक्रस्य स्थितिः हृदयसन्निहितसुषुम्णायामस्ति । चक्रमिदम् अरुणवर्णैः द्वादशदलैर्युतं कमलमस्ति । अस्य द्वादशसु दलेषु क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठेति सानुस्वारा दशवर्णाः सन्ति । अस्य वायुबीजं "यं, इति वर्तते । एतत्पूर्णगिर्याख्यं पीठमप्युच्यते । अत्र कर्णिकायां काकिनीशक्तिः ।

{5-} विशुद्धचक्रम्- अस्य चक्रस्य स्थितिः कण्ठप्रदेशे विद्यते । एतत्कमलं धूम्रवर्णं षोडशदलैः सुशोभितमस्ति । अस्य षोडशसु दलेषु अ-आ-इ-ई-उ-ऊ-ऋ-ॠ-लृ-ए-ऐ-ओ-औ-अं-अः इत्येते स्वानुस्वाराः षोडशवर्णाः विराजन्ते । अत्र बीजं "हं, इति विद्यते । अस्य जालन्धरपीठमपि नामान्तरमस्ति ।

---

1. विशुद्धिं तनुते यस्मात् जीवस्य हंसलोकनात् ।
विशुद्धं पद्ममाख्यातमाकाशाख्यं महत्परम् ।।
{ष०च०}

107

{6}- आज्ञाचक्रम्- चक्रमिदं भ्रुवोर्मध्ये मेरुदण्डस्याभ्यन्तरे ब्रह्मनाड्यां स्थितमस्ति । एतत्कमलं श्वेतवर्णं द्विदलं च विद्यते । तत्र तयोर्दलयोः ह-क्षेति सानुस्वारौ द्वौ वर्णौ विद्यते । अस्य बीजं प्रणवोऽस्ति । कर्णिकायां हाकिनीशक्तिर्विद्यते । एतद्दुज्ञानाख्यं पीठमप्युच्यते ।

योगशिखोपनिषदि प्रथमाध्याये[1] तत्तच्चक्राणां स्थानं स्वरूपञ्चैवं निर्दिष्टमस्ति ।

---

1. गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम् ।
स्वाधिष्ठानाह्वयं चक्रं लिङ्गमूले षडश्रकम् ॥
नाभिदेशे स्थितं चक्रं दशारं मणिपूरकम् ।
द्वादशारं महाचक्रं हृदये चाप्यनाहतम् ॥
कण्ठकूपे विशुद्धाख्यं यच्चक्रं षोडशारकम् ।
आज्ञानामभ्रुवोर्मध्ये द्विदलं चक्रमुत्तमम् ॥
{यो० शि०}

१७४

४. कुण्डलिनीप्रबोधप्रकार:

प्राणायामै:कुण्डलिनीप्रबोधो भवति । सा सुषुम्णाद्वारं स्वमुखे निधाय कन्दस्योपरि तिष्ठति । ये योगिन:कन्दस्योर्ध्वं प्रसुप्तां कुण्डलिनीशक्तिं प्रबोधयन्ति । त एव मोक्षं लभन्ते । ये च मूढा नोत्थापयन्ति तां ते बन्धे पतन्ति । ये तामुद्बोधयितुं युक्तिं जानन्ति, त एव यथार्थ यो विद:सन्ति ।[1]

सुषुम्णामावेष्ट्य स्वमुखं वास्येन सम्यक् निगूह्य नाभेरधोभागे कुण्डलिनी सर्वदा तिष्ठति । अत: पुरुषस्य प्राण: सुषुम्णायां प्रवेष्टुं न शक्नोति, प्राणं ब्रह्मरन्ध्रे नेतुकाम: साधको युक्तिभिस्तत्र प्राणं सम्यक् निरुध्य तत: तस्या चालनमत्यावश्यकम् । तथा चोक्तम् याज्ञवल्क्यशिक्षायाम् ।[2]

अस्या उत्थानं तु उड्डीयान-जालन्धर-मूलबन्धपूर्वकं प्राणायामेन भवति । उड्डीयानमूलबन्धराभ्यामपानवायोरूर्ध्वमाकर्षणं भवति । जालन्धरबन्धेन च प्राणावायोरध आकर्षणं भवति । प्राणापानयोरैक्येन जठरानलमत्यन्तं प्रदीप्तं भवति । तदुष्णता व्याकुला कुण्डलिनी सरला सती सुषुम्णामुखे प्रविश्य यथा दण्डेनाभिहता सर्पिणी सरला सती बिले प्रविशति तथैव कुण्डलिनी सरला सती

---

१. कन्दोर्ध्वं कुण्डलिनीशक्ति: सुप्ता मोक्षाय योगिनाम् ।
बन्धनाय च मूढानां यस्तां वेत्ति स योगवित् ।।

[प०प्रा०]

२. शिरां समावेष्ट्य मुखेन मध्ये स्वमुन्नमास्येन निगूह्य सम्यक्।
नाभौ सदा तिष्ठति कुण्डली सा धिया समाधाय निबोधयेत्ताम्।।

[या० शि० १७]

सुषुम्णायां प्रविश्य ऊर्ध्वं ब्रह्मरन्ध्रपर्यन्तं गच्छति । पश्चात् सुषुम्णाया मुखप्रवेशद्वारस्यावृतत्वात् प्राणो पि तत्पश्चात् प्रविश्य ब्रह्मरन्ध्रमुपयाति । एवं कुण्डलिनीप्रबोधपूर्वकं प्राणवायोः ब्रह्मरन्ध्रे प्रवेशानन्तमाकर्षणयुक्तया सर्वशरीरवर्तिनः प्राणस्य ब्रह्मरन्ध्रे स्थितिर्भवति । तत्र विशेषस्थित्या समाधिः जायते । एतदेवाभिप्रेत्य भगवान् शंकराचार्यः योगतारावल्यां विधीयमाने कुण्डलिनीशक्तेः उद्बोधो भवति । पश्चात् सुषुम्णाप्रवेशद्वारा ब्रह्मरन्ध्रे समुपस्थितस्य प्राणवायोः पुनः गमनागमने न भवतः ।[1]

याज्ञवल्क्यसंहितायामपि नाभेरधोभागे स्थिता कुण्डलिनीशक्तिः यदा प्रबुद्धा भवति तथा यथा उर्णनाभिः तन्तौ आरोहति तथैव सर्वे प्राणाः एकीभूय वह्निना सह सुषुम्णाद्वारा ब्रह्मरन्ध्रे आरोहन्तीत्युक्तम् ।

लिङ्गगुदयोरन्तराले गुह्यदेशे मूलाधारे वर्तमाना कुण्डलिनी सा सर्वजनवेद्या, नाडीरन्ध्रस्य संवृतत्वया तत्र बुद्धे र्मनसो वा संयोगाभावेन निश्चयस्य विकल्पस्य वा विषयो न भवितुमर्हति, किन्तु योगक्रियया प्रबुद्धा सा सकलसिद्धिदायिनी सती मोक्षद्वारकपाटमुद्घाटयति ।

---

१. उड्डीनजालन्धरमूलबन्धैरुन्निद्रितायामुरगाङ्गनायाम् ।
प्रत्यङ्मुखेन प्रविशन् सुषुम्णां गमागमौ मुञ्चति गन्धवाहः ।।
[भा० पु० 30/25]

अनन्तकालात् कर्मप्रेरितो जीवः शुक्रशोणितसम्भवं नवं नवं विग्रहमुपाददानो भुञ्जानश्च स्वकर्मानुकूलं सुखदुःखान्यतरात्मकं फलं जन्मजरा-मृत्यु-चक्रारूढो निरन्तरं संसरति । यदा अनेकजन्मार्जितपुण्यपुञ्जपरिपाकवशात् संसारात्परां शान्तिमुपाशिश्रियते तदा तदुपायं पर्येषमाणे नित्यनिरवयवचेतनात्मकस्य जीवस्याविद्यां विना बन्धो न सम्भवतीत्याचार्योपदेशेन युक्त्या च व्यवस्थाप्य तदुच्छेदनिदानञ्च विद्यात्मका उभैवेति विनिश्चित्य तदुपायो योग एव समाश्रयणीयो भवति मुमुक्षुभिः ।

योगे च स्थूलशरीरज्ञानं परमावश्यकं तज्ज्ञानं विना तदनुष्ठानायोगात् । किञ्चोपासना कर्माणि लौकिके पि चिकित्सादौ शरीरपरिज्ञानमत्यावश्यकम् । तज्ज्ञानं च तन्निदानमन्तरा शक्यमेव आधिभौतिकस्याधिभूतमुपादानकारणम् अधिदैवश्च निमित्तं तदुभयं शरीरनिदानम् । अतस्तदुभयज्ञानमपेक्ष्यते तदुभयोरपि अभिन्ननिमित्तोपादानं शक्तिसहितः शिव एव । जीवस्य शिव-शक्तिभ्यां सह ज्ञानपूर्वकमभेद एव समरसरूपो मोक्षो योगिनामभिमतः। अतस्तदुपलब्धये स्थूलशरीरस्थकुण्डलिन्या निरूपणमत्यावश्यकम् ।यस्याः मूलशक्तेःबलेन ईश्वरो जगत्सृष्टौ समर्थो भवति । सैव शक्तिः योगिनां मूलाधारे तिष्ठति । तस्या एव ध्यानादिना योगी यदा सर्वसमर्थो भवति तदा तस्या मूलशक्तेः सङ्कोचविकासाभ्यां स जगत उत्पत्तिप्रलयौ कर्तुं शक्नोति । अतः सर्वोपादानत्वात् सा सांसारकारिणी कुण्डलिनीशक्तिरित्युच्यते । मूलाधारत्वादेव सकला योगिनो मूलाधारस्थकुण्डलिनीशक्तिप्रबोधने तत्परा भवन्ति ।

प्रबुद्धाप्रबुद्धभेदात् कुण्डलिनी द्विविधा, तत्राप्रबुद्धाया: सर्वत्र सद्भावे पि कार्यसिद्धिहेतुभूता या सा तु योगिनां देहे वर्तते । अप्रबुद्धेतिनाम्ना व्यवह्रियमाणा सकलप्राणिषु मूलाधारस्थलिङ्गात्मकमांसपिण्डे सार्द्धत्रिवलयात्मिका अधोमुखी स्वकुण्डलनदृशी कुण्डलिनी तिष्ठति । सैव योगक्रियया प्रबुद्धा सती योगिनां त्रिविधेषु निखिलरोगोपद्रवाणां विनाशाय व्यापारवती मूलाधारादूर्ध्वं ब्रह्मरन्ध्रपर्यन्तं सञ्चरणशीला भवति । कायै कुण्डलिन्या उत्थानेन सकलशक्तिसम्पन्ना अनेके सिद्धा: सन्ति प्रसिद्धा: । यावन्मूलाधारे तिर्यग्रूपा कुण्डलिनी अधोमुखी तिष्ठति तावज्जन्ममरणादिफलं ददाति यदा प्रबुद्धा सा सहस्रारपर्यन्तं सञ्चरति तदा योगिनां जन्ममरणादिफलदायिनी सती कर्माणि मनोविकारांश्च दूरीकृत्य व्यापकस्यात्मन: स्वरूपं सम्यगवबोधयति ।

वस्तुत एकैव सा कुण्डलिनी मध्योर्ध्वाधोदेशानां भेदात् त्रिप्रकारा अभिधीयते । मध्यशक्ते: नाभिदेशस्थाया: कुण्डलिन्या: प्रबोधने, अध: शक्ते: मूलाधारस्थाया: कुण्डलिन्या उत्थापनाद् ऊर्ध्वशक्त्यां सहस्रारस्थितशिवशक्त्यां संयोजनेन परमं पदं प्राप्यते साधकेन ।

अत्रेदं रहस्यं गुदादूर्ध्वं लिङ्गादधस्ताच्च चतुरङ्गुलं चतुर्दलं आधारपद्ममस्ति । तस्याधारकमलस्य मध्यकर्णिकायां विराजमाना त्रिकोणाकारा योनिरस्ति यां योगिन: कामपीठं वदन्ति । अस्य योनिमण्डलस्य मध्ये महाशिवलिङ्गमस्ति । तत् शिवलिङ्गं सार्द्धत्रिवलयक्रमेण परिवेष्ट्य अधोमुखी तडित्प्रभावद् देदीप्यमाना सुषुम्णामार्गावरुध्य महाकुण्डलिनी देवी विराजते ।

अपानवायोः निकुञ्चनेन ध्यानेन च प्रबुद्धा सा सुषुम्णामार्गं परित्यजति । नाभिचक्रे विराजमानायाः कुण्डलिन्या उत्थानं जालन्धरोड्डीयानमूलबन्धैः हठयोगप्रक्रियाभिश्च क्रियते । प्राणवायोरपानेन वायुना सह संयोगः, प्रबुद्धायाः कुण्डलिन्याः सहस्रदलोपस्थापनं वा ऊर्ध्वशक्तिपातः प्रोच्यते । अर्थात् प्राणापानयोरैक्यपूर्वकं त्रयाणां बन्धानां सम्यक् सिद्धौ सत्यां कुण्डलिनी सुषुम्णाया प्रविश्य मूलाधारादूर्ध्वं गच्छन्ती क्रमशः सर्वाणि चक्रकमलानि विकासयति । यदा सा ग्रीवात् ऊर्ध्वं सहस्रारमुपगच्छति तदा मनः प्राणेन्द्रियाणां व्यापारा अवरुध्यन्ते शून्यः समाधिश्च भवति । न तत्र कालस्यादिगतिः सम्भवति । तदेव परमो मोक्षः कथ्यते ।

अयं भावः - योगप्रक्रियाद्वारा अपानवायोरधोदेशादूर्ध्वमाकर्षणं प्राणवायोश्चाधोनियमनं खेचरीमुद्रया जालन्धरादिबन्धैश्च कर्तव्यं तेन मध्यशक्तेः कुण्डलिन्याः प्रबोधो भवति । ततश्च संसारोच्छित्तिः परमानन्दप्राप्तिश्च करतले तिष्ठति ।

यस्माच्चराचरमिदं जगदाविर्भवति तदेव शक्तितत्त्वं मूलाधारः ज्ञानप्रसरभूमिश्चोच्यते । मूलाधारस्य कामपीठस्य ध्यानेन प्रसरणेन च सङ्कोचपूर्वकं कुण्डलिन्या उत्थानेन च ज्ञानस्य वृद्धिर्जायते, साधकः त्रिकालदर्शी भवति तथा तत्र जगतः सृष्टिस्थितिसंहारसामर्थ्यं प्रादुर्भवति । इति योगशास्त्रेषु प्रसिद्धम् । तस्मात्सर्वोपादानक्षमत्वात् सा शक्तिः मूलमित्युच्यते । अतो मूलाधारत्वादेव सकलयोगिनो मूलाधारस्थशक्तिप्रबोधने तत्परा भवन्ति ।

यथा मूलशक्त्या ईश्वरो जगद्रचयति सैव शक्तिः योगिनां मूलाधारे वर्तते । तस्या मूलाधारशक्तेः ध्यानादिना योगिनः सर्वसमर्था भवन्ति ।

अविद्यावशान्मोमुह्यमानं शाश्वतिकं मोक्षोपायमस्य नश्वरसांसारिकविषयलिप्सया तत्पथेषु पयन्तं जीवात्मानं स्वस्वरूपतया सदाधारयितुं यतते परमात्मशक्तिः । यथा समुद्रो व्यापकः तस्य तरङ्गास्तदुपरि सञ्चरन्ति तथैव व्यापिका परमात्मशक्तिः तस्या विकारभूताः जीवशक्तयः तासामाधारः । सैव जीवात्मापरमात्मापेक्षया मध्यमाशक्तिः कुण्डलिनीपदेन प्रख्यायते । योगिनां दृष्ट्या मणिपूरे स्थूलरूपा मूलाधारे सूक्ष्मरूपा च प्रतीयते ।

यावन्मध्यकुण्डलिन्या उत्थानं न भवति तावत् कर्मपाशबद्धो जीवात्मा जन्ममरणादिदुःखपरम्परामनुभवति । यदा स पूर्वजन्मपुण्यप्रभावेण ईश्वरकृपापात्रं भूत्वा गुरुकृपया मध्यकुण्डलिनी विधिपूर्वकं प्रबोधयति तदा तस्य योगः सिध्यति । सा शक्तिरेव तं सहजानन्दस्वरूपे प्रतिष्ठापयति । अतः प्रबुद्धा मध्यकुण्डलिनी अत्यन्तं कल्याणकारी प्रसिद्धा सिद्धसमाजे ।

मार्कण्डेयपुराणे स्थूलनिरूपणमन्तरा सूक्ष्मनिरूपणं न सम्यग्बुद्धिमधिरोहतीत्यतः प्रथमं स्थूलां कुण्डलिनीं निरूप्य सूक्ष्मा निरूपयितुं प्रयत्यते । यद्यपि मूलाधारस्था सार्धत्रिवलयान्विता कुण्डलिनी साधारणलोकदृष्ट्या अतिसूक्ष्मरूपा स्ति सर्वेषामगोचरत्वात् तथापि पञ्चभूतात्मकस्थूलजगत उत्पादकत्वात् सा योगिदृष्ट्या

केवलचिद्रूपापेक्षया स्थूला प्रोच्यते । चिद्रूपापि सा विषयसम्बन्धेन विषयरूपा भवति । सैव पुनः स्वप्रसारचातुर्येण नाभिदेशे वर्तमाना विषयसम्बन्धं विहाय स्वचैतन्यात्मकया प्रबुद्धा सती यदा व्यापकरूपेण सर्वत्र तिष्ठति तदा योगिनां परमानन्ददायकं व्यापकमखण्डैकरसं परमात्मानं प्रबोधयन्ती निराकारतया सूक्ष्मरूपेण सर्वत्र तिष्ठति ।

तथा च संसारकारिणीशक्तिः कुण्डलिनीति नाम्ना प्रसिद्धा। सा द्विप्रकारा प्रोक्ता । तत्र या प्रत्येकं प्राणिषु मूलाधारे सार्धत्रि-वलयरूपेण विद्यमाना सा स्थूलरूपा व्यवह्रियते । या तु अन्या सर्व-गामिनी समष्टिरूपा सा सूक्ष्मा । ये योगिनः एतद् यथार्थस्वरूपं ज्ञात्वा नाभिचक्रे प्रबुद्धां कृत्वा योगाभ्यासद्वारा उर्ध्वं सञ्चारयन्ति तेषां कृते सा मोक्षद्वारकपाटमुद्घाटयति । तस्मात् कालोपरि विजयप्राप्त्यै, देहसिद्ध्यै, मोक्षोपलब्ध्यै अखण्डात्मस्वरूपाभिव्यक्तये च गुरूपदेशतः सम्यग्ज्ञात्वा चिन्मात्रस्वरूपिणी सूक्ष्मा विषयसम्बलिता स्थूला वा मूलाधारमणिपूरस्था कुण्डलिनी योगिभिः योगप्रक्रियया अवश्यं प्रबोधनीया । तस्याः प्रबोधनद्वारा मोक्षप्राप्तिरतिदुर्लभा भवति ।

### 5. मोक्षविमर्शः

इमं लोकं जिज्ञासु योगी अचले सुखदायके आसने उपविश्य शुभे काले पवित्रे स्थाने च आसक्तिरहितेन मनसा प्राणं नियच्छेत् । अमलया बुद्ध्या जीवात्मनि मनो नियम्य तं च शुद्धे चैतन्ये परमात्मनि अवरुध्य धीरः सन् सर्वकर्मभ्यो निवृत्तो भवेत् । आत्मातिरिक्तं सर्वं

205

पदार्थमात्मनो नभीष्टं मन्यमानो योगी शरीरादिभ्य आत्म-
बुद्धिमपहाय शुद्धस्वरूपं परमात्मानं प्रतिक्षणं हृदि भावयन् सर्वेभ्यो
विषयेभ्य उपरमेत् । विज्ञानदृष्ट्या विषयानपहाय पार्ष्णिना गुद-
मूलमापीड्य षट्सु स्थानेषु अनिलमुन्नयेत् । नाभ्यां स्थितं वायुं
हृदये वरुध्य उदानगत्या कण्ठे नयेत्, ततो धिया अनुसन्धाय तं
वायुं शनकैः तालुमूले नयेत् । चक्षुरादीनि सप्तद्वाराणि निरुध्य
भ्रुवोर्मध्ये स्थापयेत् । तत्र मुहूर्तार्धं स्थित्वा विशुद्धदृष्ट्या ब्रह्मत्वं
प्राप्तो ब्रह्मरन्ध्रं भिन्दन् इन्द्रियैः सह देहं विसृजेत् । अयं भावः ।
स्वयं शरीरं त्यक्तुमिच्छुर्योगी पार्ष्णिना गुदमापीड्य क्रमशः षट्-
चक्राणि भिन्दन् प्राणं ब्रह्मरन्ध्रे नयेत् पुनस्तदपि भित्वा मुक्तो
भवेत् । इयं सद्योमुक्तिः कथ्यते । अथ क्रममुक्तिर्निगद्यते -

यदि विहर्तुमिच्छा स्यात्तर्हि प्राणैरिन्द्रियैश्च सह स्वर्ग-
लोक गच्छेत् । विहायसि विचरणशीलानां सिद्धानां विहारस्थाने
दिव्यान् भोगान् उपभुज्य महर्जनतपआदि लोकानतिक्रामन् सत्यं लोक-
मुपगच्छेत् । तत्र ब्राह्मण आयुःपर्यन्तं भोगानुपभुज्य ब्रह्मणा सह
मुक्तो भवेत् ।

वायुस्वरूपदेहधारिणां विद्यातपोयोगसमाधिभाजां योगिनां
त्रिलोक्या बहिरन्तश्च गन्तुं या गतिर्भवति तां कर्मभिः न प्राप्तुं
शक्यते । योगी आकाशतः प्रकाशमयब्रह्ममार्गमुपव्रज्य सुषुम्णया

--------------------------------

1. उत्क्रान्तिकाले संस्मृत्य पुनर्योगित्वमृच्छति ।
तस्मादसिद्धयोगेन सिद्धयोगेन वा पुनः ॥
ज्ञेयान्यरिष्टानि सदा येनोत्क्रान्तौ न सीदति ॥
[ मा० पु० 39/17 ]

वैश्वानरमुपतिष्ठते । ततो विद्युत्कल्पः शिशुमारचक्रं प्रयाति । पुनः सूर्याधारभूतं विष्णोर्विश्वनाभिचक्रमतिक्रम्य निर्मललिङ्ग-शरीरः सन् लोकनमस्कृतं ब्रह्मविदां गच्छति । यत्र कल्पायुषो विबुधा रमन्ते । ततो द्विपरार्धावसायिनं ब्रह्मलोकं प्रयाति, यत्र न शोको नापि जरामृत्युः, नार्तिः नोद्वेगः प्रभवति । ततो लिङ्गदेहेन पृथिवीरूपः, ततो जलरूपो ज्योतिर्मयः, ततो वायुरूपो भूत्वा विशालमाकाशं विशन् ब्रह्मस्वरूपं प्राप्नोति । योगी घ्राणेन गन्धम्, जिह्वया रसं, चक्षुषा रूपम्, त्वचा स्पर्शं श्रोत्रेणाकाशगुणशब्द-मुपेत्य प्राणेन चाकूतिमुपैति । स योगी भूतसूक्ष्मेन्द्रियसन्निकर्षमनोमयं देवमयमहङ्कारं संसाध्य गुणसन्निरोधं महत्तत्त्वं प्राप्नोति । तत् आनन्दमयो जीवः शान्तमानन्दस्वरूपं परमात्मानमुपैति । उपाधे-रन्ते प्रधानतया तामीश्वरीं गतिं प्राप्नोति, यां गतो न पुनरिह संसारे विसृज्यते ।

अयमत्र निष्कर्षः । ब्रह्मलोकगतानां द्विधा गतिर्भवति । पुण्याधिक्यात् कियन्तोऽधिकारिणो भवन्ति, ये हिरण्यगर्भस्यो-पासनां कुर्वाणा ब्रह्मणा सह मुक्ता भवन्ति । ये च भगवदुपासकाः सन्ति ते ब्रह्माण्डं भित्त्वा विष्णुलोकं गच्छन्ति । ब्रह्माण्डभेदन-स्यायमस्ति प्रकारः - शरीरस्य पृष्ठभागे यो मेरुदण्डोऽस्ति । तस्याभ्यन्तरेऽस्ति सुषुम्णाख्या नाडी । तस्या भ्यन्तरे षट् चक्राणि भवन्ति । तत्र प्रथमेषु पञ्चसु चक्रेषु क्रमशः पृथ्वीजल-तेजः वाय्वाकाशानामस्ति स्थितिः । साधकः पृथ्व्या जले, जलस्य तेजसि तेजसो वायौ, वायोः आकाशे, आकाशस्याहङ्कारे, अहङ्कारस्य

महत्तत्त्वे, महत्तत्त्वस्य प्रकृतौ प्रकृतेश्च परब्रह्मणि श्रीकृष्णाख्ये विलयं कृत्वा स्वयमानन्दमयं भगवन्तं श्रीकृष्णं प्राप्नुवन्ति । य इमां भागवतीं गतिं प्राप्नोति, स पुनः संसारचक्रे नावर्तते, तथा चोक्तं श्रीमद्भागवते । स्थिरं सुखं चासनमाश्रितो यतिर्यदा जिहासुरिममङ्ग लोकम् । [2/2/15]

अपि च श्रीमद्भागवतस्य चतुर्थस्कन्धे 4 अध्याये दक्षस्य यज्ञे पत्युः सदाशिवस्य भागमनवलोकयन्ती सती-शिवसदृशः कश्चिद्देवो नास्ति, यः प्राणिमात्रस्य प्रियो ऽस्ति । तस्य पवित्रमङ्गलमयं नाम सकृदप्युच्चारितं सत् पापराशिं भस्मसात् कुरुते । कालो ऽपि यस्याज्ञां नो लङ्घयते तस्मै एव भवान् द्रुह्यतीत्यहो आश्चर्यम् ? अतः शिवद्रोहिणो भवत उत्पन्नमिदं शरीरं त्यक्ष्यामि, यतो हि मोहाद्भक्षितस्य विषयुक्तस्यान्नस्य वमनमेव श्रेयस्करं भवतीति पितरमुक्त्वा उदङ्मुखी भूमावुपविश्य जलं स्पृष्ट्वा नेत्रे निमील्य स्वपत्युः शिवस्य ध्याने निमग्ना सती प्राणापानौ समौ कृत्वा नाभिचक्रतः प्राणमुत्थाप्य हृदि अनाहते चक्रे संस्थाप्य तत उरसि विशुद्धाख्यचक्रे कृत्वा ततो भ्रुवोर्मध्ये आज्ञाचक्रे नीत्वा सर्वत्र तया वायोरग्नेश्च धारणा कृता, यया तत्क्षणं तद्देहः समाधिजाग्निना प्रजज्वाल ।

x x
x x x x
x x

## नवमो ऽध्यायः

## मार्कण्डेयपुराणे सांख्ययोगदृष्ट्या ईश्वरस्वरूपविमर्शः

सांख्यदर्शनस्य साम्प्रतमुपलब्धेषु ग्रन्थेषु ईश्वरस्य प्रतिपाद्यविषयतया न दृश्यते व्याख्यानम् । तावान्तरप्रसंगेषु तद्विषये चर्चा केवलं तत्र दृग्गोचरीभवति । अर्वाचीनास्तु केचिद् विद्वांसः सांख्यदर्शने ईश्वरो ऽपि प्रतिपाद्यविषयः, तस्य प्रतिपादनं तत्संकेतरूपेण वर्तते इति व्याहरन्ति ।[1]

गौडपादभाष्ये तत्त्वकौमुद्यां चेश्वरस्य सृष्टौ कारणत्वानुपपत्तिर्निरूपिता वर्तते । तथा-" अत्र सांख्याचार्या आहुः - निर्गुणत्वादीश्वरस्य कथं सगुणतः प्रजा जायेरन् । निर्गुण ईश्वरः, सगुणानां लोकानां तस्मादुत्पत्तिरयुक्तेति ।[2]

सर्गः महदादिभूतान्तः प्रकृत्यैव कृतो नेश्वरेण, न ब्रह्मोपादानः नाप्यकारणः नेश्वराधिष्ठितप्रकृतिकृतः, निर्व्यापारस्याधिष्ठातृत्वासम्भवात्" इति ।

विज्ञानभिक्षवस्तु नित्यनिर्दोषैश्वर्य दर्शनेन तत्र चित्तावेशतो विवेकाभ्यासप्रतिबन्धस्य संभावनया सांख्याचार्यैः कल्पनेश्वरनिरूपणाभावे बीजमिति प्रादर्शयन् -

---

1. दृष्ट्वा च परमात्मानं प्रत्यक्षं विश्वरूपिणम् ।
   विश्वपादशिरोग्रीवं विश्वेशं विश्वभावनम् ॥
   [मा०पु० ३९/2]

2. अकारश्च तथोकारो मकारश्चाक्षरत्रयम् ।
   एतास्तिस्रः स्मृता मात्रा सात्त्वराजसतामसाः ॥
   [मा०पु० ३९/4]

"अस्मिन्नेव शास्त्रे व्यावहारिकस्यैवेश्वरप्रतिषेधस्यै-श्वर्यवैराग्यार्थमनुवादत्वौचित्यात् । यदि हि लोकायतिकमता-नुसारं नित्यैश्वर्यं न प्रतिषिध्येत् तदा परिपूर्णनित्यनिर्दोषैश्वर्य-दर्शनेन तत्र चित्तावेशतो विवेकाभ्यासप्रतिबन्धः स्यादिति सांख्या-चार्याणामाशयः । नेश्वरवादस्य न क्वापि निन्दादिकमस्ति, येनोपासनादिपरतया तत् शास्त्रं संकोचयेत्" इति ।

डा० रामशंकरभट्टाचार्यस्त्वेवमाह- "यतो हीश्वरे बुद्धिरस्ति, अतः अध्यवसायोऽपि तस्मिन्नस्ति । अत एव प्रतिविषयाध्यवसायो दृष्टम्, इत्येवंरूपदृष्टप्रमाणं भगवतीश्वरे-ऽस्त्यैव । अत एव तदाकारोल्लेखि विज्ञानमपि ईश्वरे विद्यते एव । ईश्वरकरणस्य स्वरूपं योगर्द्धिसम्पन्नमतः तस्य प्रत्यक्षमपि करणा-नुसार्येवेति विज्ञेयम् । सात्त्विकबुद्धिधर्मरूपस्य ऐश्वर्यस्य सत्ता सांख्ये अभ्युपगतैव । ईश्वरता विशिष्टान्तः करणवान् पुरुष ईश्वर इति सांख्याः । ईदृशान्तःकरणं बहुविधमेवेति नैकप्रकाराः ईश्वराः सन्तीति स्वीकार्यमेव । यथा भूततन्मात्राभिमानिन ईश्वरास्तथैव ब्रह्माण्डाधीशभूताः बहवो हिरण्यगर्भा अपि सन्ति, ब्रह्माण्डा-नाम् असंख्येयत्वात् । अनादिमुक्तचित्तव्यपदिष्ट ईश्वरोऽपि सांख्यसम्मत एव ।

एतन्मतं मार्कण्डेयपुराणादिमतेन किञ्चिद् साम्यं भजते ? युक्तियुक्तं चेति ज्ञातव्यम् ।

---

1. विष्णुर्ब्रह्मा हरश्चैव ऋक्सामानि यजूंषि च ।
मात्राः सार्धाश्च तिस्रश्च विज्ञेयाः परमार्थतः ॥
ओमित्युच्चारणात् सर्वं गृहीतं सदसद् भवेत् ।
ह्रस्वा च प्रथमा मात्रा द्वितीया दैर्घ्यसंयुता ॥
तृतीया च प्लुता धाक्ष्या वचसः सा न गोचरा ।
इत्येतदक्षरं ब्रह्म परमोंकारसंज्ञितम् ॥
मा०पु० 39/13-14 ।

## दशमो ऽध्यायः

## उपसंहारः

पूर्वाध्यायेषु मार्कण्डेयपुराणे प्रतिपादितानां सांख्ययोग तत्त्वानां स्वरूपादीन्युपनिषत्पुराणदर्शनान्तरीयतद्विषयकविवेचनेन सहैव प्रस्तुतानि । तेन तेषां विषये इमानि तथ्यानि स्फुटीभवन्ति-

1. मार्कण्डेयपुराणे - प्रतिपादितानि सांख्ययोग तत्त्वानि श्रुतिस्मृतिसिद्धानि सन्ति । तेषां विवेचनञ्च श्रुतिस्मृतिसिद्धविषयैःप्रायःसाम्यं भजते ।
2. मार्कण्डेयपुराणे - प्रतिपादितानि सांख्ययोग तत्त्वानि विशेषतो नुभेयानि योगजप्रत्यक्षगम्यानि वा सन्ति।
3. मार्कण्डेयपुराणे - सांख्ययोग तत्त्वानां स्वरूपाणि भेदाश्च ये दर्शिताः सन्ति तेषां क्वचित्साम्यं क्वचिद्वैषम्यं वान्यदर्शनगततत्त्वमीमांसया वर्तते । तथा- शरीरादिसङ्घातभिन्नत्वं विभुत्वम्, नित्यत्वम्, प्रतिशरीरं भिन्नत्वम्,कारणरहितत्वम्, निरवयवत्वञ्चैतनत्वञ्च न्यायवैशेषिकदर्शनोक्तात्मनः साङ्ख्यदर्शनोक्तपुरुषस्य च समानतया प्रतीयते । न्यायदर्शने ह्यात्मनः सुखदुःखेच्छादिगुणनित्ययोगी स्वरूपात्तः। साङ्ख्यस्तस्य निर्गुणत्वम ङ्गीकृतमित्यनयोर्वैषम्यनिदर्शनम् । तत्रेदं ऽध्येयं भवतीत्याहुः। साङ्ख्या योगाश्च बुद्धिप्रतिबिम्बितस्य पुरुषस्य सुखदुःखाद्यनुभवकर्तृत्वं भोक्तृत्वञ्चाङ्गगीकुर्वन्त्येवेति ।

नैयायिका वैशेषिकाश्चेश्वरं जगतो निमित्तकारणं परमाणूश्चोपादानकारणान्याहुः। साङ्ख्या योगाश्च प्रकृतिमेव जगदुपादान-

मामनन्ति । नैयायिकादीनां मते ईश्वरेच्छया स्पन्दमानानां सूक्ष्माणां परमाणूनां संयोगेन द्व्यणुकानां तेषां संयोगेन त्र्यणुकानां ततश्च स्थूलानां पृथिव्यादिकार्यद्रव्याणामुत्पत्तिर्भवति । साङ्ख्य-दर्शने तु प्रकृतेरेव महदादिक्रमेण जगत उत्पत्तिर्भवतीत्यस्ति सिद्धान्तः। अत्र नैयायिकादीनपेक्ष्य साङ्ख्यानां सूक्ष्मतरतत्त्वनिरूपणसामर्थ्यं स्फुटमभिव्यज्यते । न्यायवैशेषिकदर्शनयोः परमाणुभ्य आरभ्य द्व्यणुकानि सन्त्यतीन्द्रियाणि परमाणुपरिमाणवन्त्येवेति निगदितम् । साङ्ख्ययोगैश्च महाभूतानि त्यक्त्वा न्येषां तत्त्वानामतीन्द्रियता नुमानगम्यता च निर्दिष्टा । तत्रापि महाभूतपरमाणूनां सूक्ष्मताङ्गीकृतैव ।

बुद्धेस्तत्स्वरूपेण विवेचनं साङ्ख्ययोगदर्शनयोरेव दृश्यते नान्येषु दर्शनेषु । अन्यत्र बुद्धिशब्दो ज्ञानार्थे प्रयुक्त इति तु सत्यम् । वेदान्तदर्शने एकस्यैवान्तःकरणस्य वृत्तिभेदेन चातुर्विध्यमङ्गीकृतम्। मनो बुद्धिरहङ्कारश्चित्तमिति । परं साङ्ख्यापेक्षया तदीयमन्तःकरणविवेचनमपूर्णं प्रतिभाति । वेदान्तयोगसाङ्ख्यदर्शनेष्वेवाहङ्कारस्य चर्चा भवति नेतरेषु न्यायादिषु । परं वेदान्तदर्शने हङ्कारस्य विवेचनं न्यूनमपूर्णञ्चास्ति ।

मनसो ज्ञानहेतुत्वम्, इन्द्रियसहायकत्वम्, संशयकर्तृत्वञ्च साङ्ख्ययोगदर्शनयोर्न्यायवैशेषिकयोश्च तुल्यं प्रतीयते । परं तस्योत्पत्तिपरिमाणादिविषये मतभेद एव । नैयायिका वैशेषिकाश्च मनो नित्यद्रव्यमनुत्पत्तिमच्चेत्याहुः। साङ्ख्यमते तु मनो हङ्कारजन्यतया तत्र क्रियावत्त्वानित्यमेवोक्तम् । नैयायिका वैशेषिकाश्च

214

मनो ऽणुपरिमाणमिति वदन्ति । साङ्ख्यदर्शने तस्य विभुपरिमाणाभावः कारिकयोपात्तो व्यक्ताव्यक्तयोर्वैधर्म्यं निरूपणप्रसङ्गे। विज्ञानन्दमतोदयास्तु तस्य विभुत्वमेवोपपादयामासुः। विज्ञानभिक्षुभिस्तस्य मध्यमपरिमाणवत्त्वमणुत्वनिरसनपूर्वकं निर्दिष्टम् ।

इन्द्रियाणामुत्पत्तिविषये न्यायवैशेषिकमीमांसावेदान्तदर्शनेषु तेषां भौतिकत्वं प्रमाणैरनुमानादिभिःप्रतिपादितमस्ति । साङ्ख्ययोग दर्शनयोस्तेषामुत्पत्तिरहङ्कारादेवेति निश्चितम्। श्रुतिस्मृतिप्रामाण्यात् । तेषां ज्ञानसाधनत्वमनित्यत्वं नियतदेशावस्थितत्वञ्च दर्शनेषु समानप्रायम् । अन्यदर्शनेष्विन्द्रियाणां भौतिकत्वाभ्युपगमेन शरीरावयवरूपत्वमित्यभिव्यज्यते । साङ्ख्यदर्शने तु तद्भिन्नानि शक्तिरूपाणीन्द्रियाणीति प्रतिपादितम् । औपनिषदानाम् "अन्नमयं हि सौम्य मनः" इत्यादिमन्त्राणां त्विन्द्रियाधिष्ठानपरत्वं तैरुक्तम् ।

तन्मात्राणां विषये न्यायवैशेषिकमीमांसादर्शनेषु का पि चर्चा नास्ति । तत्र भूतकारणानि परमाणव इत्येवोपपादितम् । साङ्ख्ययोगवेदान्तदर्शनेषु तेषां भूतकारणत्वम्, सूक्ष्मत्वम्, निर्विशेषशब्दादिमत्त्वञ्चेत्यादिनिर्दिष्टम् ।

पञ्चमहाभूतानां स्थूलप्रपञ्चारम्भकत्वविषये सर्वेषामा-स्तिकानास्तिकदर्शनानामविवादः । बौद्धचार्वाकाभ्यामाकाशस्य भूतत्वं नाङ्गीकृतमिति विशेषः। एष एवास्य प्रबन्धस्य सारांशः। यदनेन साङ्ख्यतत्त्वानि जिज्ञासूनां केषामप्युपकारो भवेत्तदा स्य विशेषेण सार्थक्यं स्यात् । मया तु साम्प्रतं भगवतः पुराणपुरुषोत्तमस्य नारायणस्य करकमलयोरेवार्प्यते -

त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये ।
गृहाण वरदो भूत्वा प्रसीद परमेश्वर ।।

॥इति शम्॥

221

## सहायक ग्रन्थ-सूची


1• मार्कण्डेयमहापुराणम् - नागपब्लिसर्स, जवाहरनगर, दिल्ली ।

2• मार्कण्डेयमहापुराणम् - साहित्यभण्डार, सुभाषबाजार, मेरठ।

3• मार्कण्डेयमहापुराणम् - पौराणिक एवं वैदिक अध्ययन, एवं अनुसंधान संस्थान, नैमिषारण्य ।

4• सांख्यप्रवचनभाष्य - विज्ञानभिक्षु कलकत्ता 1936

5• सांख्यसूत्रम् - [अनिरुद्धवृत्ति सहितम्] महर्षिकपिलप्रणीतम्-रत्नापब्लिकेशन सन्स बी021/42ए०कमच्छा, वाराणसी सन् 1983 ई० ।

6• सांख्यदर्शन का इतिहास - उदयवीर शास्त्री, अजय प्रिन्टर्स नवीन शाहदरा दिल्ली -1100 32

7• स्कन्दपुराणम् - सरस्वती यन्त्रालय कलकत्ता-1959

8• हिस्ट्री आफ धर्मशास्त्र - पाण्डुरङ्ग वामन काणे, पूना 1941

9• पुराणपरिशीलन - पं०गिरिधर शर्मा चतुर्वेदी, बिहारराष्ट्र-भाषा, परिषद्, पटना ।

10• पुराणपर्यालोचनम् - डा०श्रीकृष्णमणि त्रिपाठी, चौखम्भा सुर-भारती प्रकाशन, वाराणसी ।

11• अमरकोश: - अमरसिंह प्रणीत:, मणिप्रभा हिन्दी व्याख्या-पेत:, चौखम्भा संस्कृत सिरीज आफिस, वाराणसी 2014

12• ईशाद्यष्टोत्तरशतोपनिषद्- निर्णयसागर प्रेस बम्बई 1932 चतुर्थसंस्करण ।

13• ओरियेण्ट एण्ड डेवलपमेण्ट-आफ सांख्यसिस्टम्-पी०वी०चक्रवर्ती

14• इण्डियन फिलासाफी - डा० राधाकृष्णन्

15• इण्डियन हिस्टारिकल क्वालिटी- 1931

16• उत्तर रामचरितम् - महाकवि भवभूतिप्रणीतम्, चौखम्भा संस्कृत-सिरीज आफिस वाराणसी 1961ई०

22

17· ऋग्भाष्य संग्रह - सम्पादक-देवराज चानना, मुंशी राममनोहर लाल देहली-6

18· कठोपनिषद् - सन् 1961 ई० गीताप्रेस, गोरखपुर।

19· किरातार्जुनीयम् - महाकवि भारविप्रणीतम्-चौखम्भा संस्कृत-सीरीज, आफिस वाराणसी सन् 1961 ई०

20· कूर्मपुराणम् - सरस्वती पत्रालय, कलकत्ता 1962

21· गरुड़ पुराणम् - चौखम्भा संस्कृत सिरीज आफिस, वाराणसी 1964 ई०

22· गीता रहस्यम् - बालगंगाधर तिलक, पूना -1962

23· चरकसंहिता (चरक) - निर्णयसागर प्रेस, बम्बई 1947

24· छान्दोग्योपनिषद् - वाणी विलास संस्कृत पुस्तकालय, वाराणसी।

25· तत्त्वप्रकाशिका - श्रीरंगप्रकाशन 1929

26· तत्त्व संग्रह - शान्तिरक्षित, सेन्ट्ल लायब्रेरी, बड़ौदा 1926

27· तैत्तिरीययोपनिषद्- गीताप्रेस, गोरखपुर

28· दर्शनसंग्रह - बलदेव उपाध्याय हिन्दी समिति उत्तरप्रदेश, लखनऊ 1968

29· दि महाभारत - ए क्रिटिज्म, चिंतामणि वैद्य, बम्बई 1907

30· दि रिलीजन एण्ड फिलासाफी- ए०बी०कीथ, कैम्ब्रिज 1925
आव द वेद एण्ड उपनिषद्

31· दुर्गासप्तशती - गीताप्रेस, गोरखपुर सं०2040

32· देवी भागवतम् - पण्डित पुस्तकालय, काशी वाराणसी।

33· धर्मशास्त्र का इतिहास- पी०वी०काणे पूना, 1953

34· न्यायवार्तिक तात्पर्य टीका- वाचस्पति मिश्र कलकत्ता, 1936

35· न्यायवार्तिक - उद्योतकार चौखम्भा संस्कृत सीरिज, वाराणसी 1916

36· न्याय कुसुमांजलि - भारतीय विद्याप्रकाशन, वाराणसी 1968

37· नारद पुराणम् - चौखम्भा अमर भारतीप्रकाशन वाराणसी सन् 1975

38• नीतिशतकम् - श्री भर्तृहरिविरचितम्-कृष्णानंद शास्त्री भारतीय संस्कृत हीरागेट जालन्धर शहर सन् 1973 ई०

39• नैषधीय चरितम् - महाकवि हर्षप्रणीतम् चौखम्भा अमर भारती प्रकाशन वाराणसी सन् 1951 ई०

40• पातंजल योगदर्शनम् व्यासभाष्योपेतम् - महर्षि श्री पतंजलिमुनि विरचितम् [योगव्यास" विवृत्तिनामक हिन्दी व्याख्यायुत व्यास-भाष्योपेतम्। चौखम्भा संस्कृतसिरीज, वाराणसी 1970 ई०।

41• प्राचीनभारतीय साहित्य- विण्टरनित्स, मोतीलाल बनारसीदास, वाराणसी।

42• पुराण विमर्श: - चौखम्भा विद्याभवन, प्रकाशन, वाराणसी 1965

43• फिलासफी आफ उपनिषद्- आपसन् 1906

44• बुद्धचरितम् - श्रीमदश्वघोष विरचितम्-चौखम्भाविद्याभवन, वाराणसी सन् 1963 ई०

45• बृहदारण्यकोपनिषद् - आनन्दाश्रम ,पूना

46• भारतीयदर्शन - डा०पारसनाथ द्विवेदी, प्रकाशक-श्रीरामभेहरा-एण्ड कम्पनी आगरा-3, सन् 1980ई०

47• भारतीयदर्शनशास्त्र - मोतीलाल बनारसी दास, वाराणसी 1953

48• महाभारतम् - महर्षि वेदव्यासप्रणीतम्, गीताप्रेस, गोरखपुरसं•2021

49• मत्स्यपुराणम् - महर्षिवेदव्यासप्रणीतम्, गीताप्रेस, गोरखपुर सन् 1984 ई०पूर्वार्ध तथा 1985 ई०उत्तरार्द्ध ।

50• मनुस्मृति: - महर्षिमनुप्रणीता-सविमर्श मणिप्रभा टीकायुक्त-चौखम्भा संस्कृत सिरीज आफिस वाराणसी-1, सन् 1970 ई०

51• महाभारत - भण्डारक ओरियण्टल रिसर्च इन्स्टीच्यूट, पूना

52• महाभारत — नीलकण्ठी टीका रामचन्द्रशास्त्री, पूना 1929-33

53• याज्ञवल्क्य स्मृतिः — महर्षि याज्ञवल्क्य प्रणीता-चौखम्भा संस्कृत-संस्थान, वाराणसी सन् 1983

54• युक्ति दीपिका — मोतीलाल बनारसी दास, दिल्ली ।

55• योगतत्त्व वैशारदी — वाचस्पति मिश्र, चौखम्भा संस्कृत सीरिज, वाराणसी 1935

56• योगभाष्य — वाचस्पतिमिश्र, आनंदाश्रमग्रन्थावलिपूना 1932

57• योगवार्त्तिकविज्ञानभिक्षु-चौखम्भा संस्कृत सीरिज बनारस 1935

58• योगवासिष्ठम् — मुंशीराम मनोहरलाल, पब्लिशर्स प्रा०लि० रानी झांसीरोड, नईदिल्ली, सन् 1981ई०

59• बृहदारण्यकोपनिषद् — गीताप्रेस, गोरखपुर ।

60• ब्रह्मवैवर्तपुराणम् — महर्षि वेदव्यासप्रणीतम्-मोतीलाल बनारसीदास बंगला रोड जवाहरनगरदिल्ली 110007सन्1985

61• वाक्यपदीयम् — श्रीभर्तृहरि प्रणीतम्, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी सन् 1977 ई० ।

62• वायुपुराणम् — सरस्वती यंत्रालय, कलकत्ता 1959

63• वाल्मीकीय रामायणम्— महर्षि वाल्मीकि, प्रणीतम्, गीताप्रेस गोरखपुर सं० 2033

64• विष्णुपुराणम् — महर्षिवेदव्यास प्रणीतम्, गीताप्रेस, गोरखपुर सं204।

65• वैशेषिक सूत्रम् — वैदिक पुस्तकालय मुरादाबाद 1929

66• शिवपुराणम् — महर्षि वेदव्यासप्रणीतम्-चौखम्बा विद्याभवन चौक वाराणसी।

68• शिशुपालवधम् — ~~महर्षि/वेदव्यास/प्रणीतम्-चौखम्भा/विद्या~~ (षष्ठसर्गात्मकम्) महाकवि माघ प्रणीतम् चौखम्भा विद्याभवन, वाराणसी सन् 1961

68• श्रीमद्भागवत्पुराणम् — महर्षि वेदव्यास प्रणीतम्-गीताप्रेस, गोरखपुर-सं02033

69• श्वेताश्वतरोपनिषद् - श्वेताश्वत.पि:,गीताप्रेस,गोरखपुर 2033

70• षड्दर्शनसमुच्चय - हरिभद्रसूरि,एशियाटिक सोसायटी,कलकत्ता 1905

71• सर्वदर्शनसंग्रह - माधवाचार्य,चौखम्भा विद्याभवन,वाराणसी 1964

72• सांख्यकारिका - श्रीकृष्णमणि त्रिपाठी,चौखम्भाविद्याभवन, वाराणसी।

73• सांख्यकारिका - माठरवृत्ति चौखम्भा,वाराणसी ।

74• सांख्यतत्त्वकौमुदीप्रभा- सत्यप्रकाश नवलरामपुर,हाउस इलाहाबाद सन् 1962 ई०

75• सांख्ययोगदर्शन का जीर्णोद्धार-

76• सांख्यदर्शन की ऐतिहासिकपरम्परा- सत्यप्रकाशन,कलरामपुर,हाउस- इलाहाबाद ।

77• सांख्यदर्शन - उदयवीर शास्त्री,निरजानंदवैदिक संस्थान, गाजियाबाद सं० 2017

-----

